# कपिलपुराणम्

## अथ प्रथमोऽध्यायः

पान्तु वो जलदश्यामाः शार्ङ्गज्याघातकर्कशाः
त्रैलोक्यमण्डपस्तम्भाश्चत्वारो हरिबाहवः १
शल्यजिदुवाच
मया श्रुतानि क्षेत्राणि पुण्यान्यघहराणि च
इदानीं श्रोतुमिच्छामि क्षेत्राण्युत्कलदेशके २
तेषु क्षेत्रेषु यत्पुण्यं यत्तीर्थं याश्च देवताः
यदाश्रयं च मान्यांस्तान् सर्वान् त्वं कथय त्वयम् ३
त्वत्प्रसादाद्भविष्यामि कृतार्थोऽहं महामुने
सर्वाभिर्देवताभिस्त्वं वन्द्यः पूज्यतमः प्रभो ४
त्वं हि सर्वाणि जानासि पुराणाष्टदशानि च
सर्वशास्त्राणि जानासि सर्वज्ञस्त्वं महामुने ५
कपिल उवाच
कथयामि रहस्यं त्वां शृणुष्वैकमना नृप
येषां स्मरणमात्रेण कल्मषा यान्ति वै क्षयम् ६
वर्षाणां भारतं श्रेष्ठं देशानामुत्कलः स्मृतः
उत्कलेन समो देशो देशो नास्ति महीतले ७
अत्रैवोदाहरन्तीममितिहासं पुरातनम्
ऋषीणां चैव सम्वादं भारद्वाजेन धीमता ८
पुष्करे च वने पुण्ये तिष्ठन्तो मुनिपुङ्गवाः
भरद्वाजमिदं प्रोचुस्ते सर्वे च हतांहसः ९
ऋषय ऊचुः
यस्मिन्पुण्यवने विद्वन् यत् पुण्यं समुदाहृतम्
पापानां चैव यद् भोग्यं तत् सर्वं कथयस्व नः १०

भरद्वाज उवाच
अस्मिन् पुण्यवने विप्रा ये वसन्ति नरोत्तमाः
तेषां भाग्यं महज्जन्म सफलं गीयते द्विजैः ११
पुष्करेऽस्मिन् वने विप्रा येऽर्चयन्ति जनार्दनम्
सर्वपापक्षयं कृत्वा हरेः पदमवाप्नुयुः १२
अत्र ये स्थातुमिच्छन्ति वीतरागा विकल्मषाः
तेषां भाग्यवतां पित्रोः सफलं जीवनं श्रुतम् १३
येऽत्र दानं द्विजातिभ्यः प्रयच्छन्ति सुभक्तितः
ते स्वर्गलोकमासाद्य न त्यजन्ति कदाचन १४
स्वल्पपुण्यं बहुतरं भवत्यत्र तपोधनाः
देवताः स्थातुमिच्छन्ति अन्येषां का कथा द्विजाः १५
स्वपन्त्यत्र तु ये ते वै प्रणमन्ति जनार्दनम्
भोजनं कुर्वते येऽत्र ये यजन्ति महेश्वरम् १६
एवमादिगुणाश्चास्य पुष्करस्य तपोधनाः
अत्र प्राणान् परित्यज्य गताः स्वर्गं नरोत्तमाः १७
एतत् पुण्यतमं तीर्थं वनानामुत्तमं श्रुतम्
देवताभिः समाजुष्टं पुण्यतीर्थैरभिष्टुतम् १८
वकुलैश्चम्पकैर्वृक्षैर्दाडिमैरतिशोभितैः
अशोकैश्चैव पुन्नागैः कर्णिकारैश्च पाटलैः १९
पूगैः पानसकैर्वृक्षैर्नारिकेलैश्च खर्जुरैः
सालतालतमालैश्च वटैरश्वत्थकैस्तथा २०
एवं नानाविधैर्वृक्षैः पूरितं तत् समन्ततः
मल्लीजातीसमायुक्तं कुन्दपुष्पैस्तु शोभितम् २१
तुलसीदलकैर्युक्तं पवित्रं पापनाशनम्
अत्र पापं तु कुर्वन्ति ये नरा मोहसंयुताः २२
न तेषां तु पुनर्जन्म भवेद्वै भारतोत्तमे
अणुमात्रमयं चात्र भवेद्वै पर्वतोपमम् २३
अत्र प्रतिग्रहं घोरं हालाहलविषोपमम्

अन्य क्षेत्रेषु यत्पुण्यं तदप्यत्र क्षयं भवेत्  २४
ईषत्पापं भवेच्चात्र मेरुतुल्यं महीसुराः
एतस्मात्कारणाद्विप्रा यदिच्छथ परां गतिम्  २५
पापानि च परित्यज्य पुण्यं तत्र समाचर
इति तस्य वचः श्रुत्वा मुनयः पुण्यलालसाः  २६
ऊचुस्ते घनगम्भीरं भारद्वाजं महद्वचः
ऋषय ऊचुः
दुष्करं तत्र पुण्यं वै भारद्वाज महामते  २७
पापं पुण्यतमं यत्र तत्स्थानं वद नः प्रभो
भरद्वाज उवाच
इममर्थं मया पृष्टः कुशकेतुः पुरा द्विजाः  २८
स यदाह शृणुध्वं तद्भवपापविमोचनम्
देशानां प्रवरो ह्येक ओड्रदेशोऽतिविश्रुतः  २९
पुण्यायन्ते च पापानि तत्र देशे परन्तपाः
पुण्यक्षेत्राणि तीर्थानि तत्र सन्ति महर्षयः  ३०
अल्पपुण्यं बहुतरं भवेत्तत्र न संशयः
तस्मात्क्षेत्रमिदं विप्राः सेवनीयं प्रयत्नतः  ३१

इति श्रीकपिलपुराणे ऋषिप्रश्नो नाम
प्रथमोऽध्यायः  १

अथ द्वितीयोऽध्यायः

ऋषय ऊचुः
ओड्रदेशस्य माहात्म्यं समाख्याहि सविस्तरम्
यास्यामस्तं वयं देशं तिष्ठामस्तत्र देशके  १
भरद्वाज उवाच
सर्वपापहरं देशमोड्रं देवैस्तु कल्पितम्
शृणुध्वं कथ्यमानं हि विस्तरेणास्य भो द्विजाः  २

तस्मिन्नोड्रे सदा सन्ति कृष्णार्कपार्वतीहराः
एवमीशस्य क्षेत्रं तु सर्वपापप्रणाशनम् ३
तत्र देशे द्विजश्रेष्ठाः नदीनामुत्तमा नदी
महानदीति विख्याता सर्वपापापनोदिनी ४
तस्या नद्यास्तु माहात्म्यं कथयामि पुनः पुनः
तस्यां स्नात्वा नरश्रेष्ठो दिव्यलोकं समाप्नुयात् ५
पुरा त्रेतायुगे विप्रः सुकान्तिनामतः श्रुतः
ब्राह्मणः सर्वशास्त्रज्ञो नीतिज्ञः पुलहात्मजः ६
महेन्द्रे पर्वते तिष्ठन् स प्राह पितरं द्विजः
सुकान्तिरुवाच
एतत्स्थानं जनाकीर्णं बभूव हि ततः प्रभो ७
तपश्चर्तुं महारण्यं प्रयातुं कथयस्व माम्
पुलह उवाच
सर्वव्यक्तिपरित्यक्तं सर्वपक्षिसुखावहम् ८
मृगानेकैः समाकीर्णं सिद्धैर्गन्धर्वसेवितम्
तपसस्तु महत् स्थानं विद्वद्भिः परिकीर्तितम् ९
व्रज त्वं सुमना भूत्वा सुफलं विन्ध्यपर्वतम्
पितृवाक्यमिदं श्रुत्वा सुकान्तिः सहसा ययौ १०
फलदं सर्वपुण्यानां शुभदं तपसे बुधाः
गत्वा च दृष्टवान् स्थानं तपसे निर्जनं महत् ११
तपोऽत्र च करिष्यामि मनसेदं विचार्य्यवान्
तत्रादृष्ट्वा च सलिलं सलिलार्थं तपोऽकरोत् १२
आयाहि निम्नगे देवि सरिच्छ्रेष्ठेऽम्बुधिप्रिये
तपोऽत्राहं करिष्यामि मयि गङ्गे कृपां कुरु १३
जप्त्वेदं परमं मन्त्रं सर्वसिद्धिमवाप ह
मन्त्रस्यास्य प्रसादेन विप्रस्य तपसस्तथा १४
सर्वपापहरा तत्र गङ्गा अवततार ह
गङ्गोवाच

साधु पुत्र महाभाग तपस्तप्तं त्वया महत् १५
त्वदर्थमाजगामाहं विन्ध्यं शैलं नगोत्तमम्
इदानीं स्वेच्छया विप्र त्वं कुरुष्व तपो महत् १६
तावदत्र तु तिष्ठामि यावत्ते तपसः फलम्
विन्ध्यादस्माद्गमिष्यामि पश्चाच्च पूर्वसागरम् १७
इदानीमत्र तिष्ठामि तपसेऽर्थे तवात्र च
देवानां दुर्लभा चाहं मनुष्याणां च का कथा १८
प्राप्ताऽहं च त्वया ब्रह्मन् पुलहस्य प्रभावतः
भरद्वाज उवाच
गङ्गाया वचनं श्रुत्वा प्रीतात्मा पुलहात्मजः
उवाच घनगम्भीरं वचनं जाह्नवीं द्विजाः १९
भूतनाथस्य देवस्य प्रिया त्वं चक्रपाणिनः
ब्रह्मणश्च प्रिया त्वं हि सर्वेषां चैव दुर्लभा २०
ब्रह्मलोकात्पुरा जाता तस्माच्छंकरमूर्धनि
तस्माद्वहसि मेदिन्यां प्राणिनां हितकारणात् २१
जाह्नवीमिदमुक्त्वा तु कृताञ्जलिपुटोऽग्रतः
प्रपन्नो हि द्विजश्रेष्ठः स्तुतिमेनां चकार ह २२
सुकान्तिरुवाच
नमामि देवीं पापघ्नीं जाह्नवीं भक्तवत्सलाम्
त्रैलोक्यपावनी त्वं हि रक्ष मां शरणागतम् २३
सर्वपापक्षयकरी सर्वलोकार्तिनाशिनी
पूज्या त्वं सर्वदैवैस्तु त्वां नतोऽस्मि पुनः पुनः २४
गिरिजानाथशिरसि स्थिता त्वं जनभाविनी
त्वां नतोऽस्मि स्थितां गङ्गां पितामहकमंडलौ २५
विष्णोः पादाब्जजां त्वां हि भगीरथवरप्रदाम्
प्रणतोऽस्मि महाभागां तारिणीं सगरात्मजान् २६
इति श्रुत्वा स्तुतिं विप्राः पपात धरणीतले
अथ गङ्गा महापुण्या दृष्ट्वा भक्तिं द्विजस्य च २७

विप्रमुत्तोलयामास बाहुभ्यां पतितां भुवि
मुखे तु चुम्बनं दत्वा मार्जयित्वा तनोः रजः २८
क्रोडे निवेशयामास उवाच मधुरं वचः
गङ्गोवाच
पुत्रस्त्वं मे महाभाग धर्मतो नात्र संशयः २७
तवाद्याऽपि च माताऽहं वरं वरय सुव्रत
सुकान्तिरुवाच
यदुक्तं हि त्वया पूर्वं गन्ताऽस्मि पूर्वसागरम्
इदानीं गच्छ त्वं मातर्मम कीर्तिः सदास्तु वै ३०
अपरं वरमिच्छामि प्रपन्नाय प्रदीयताम्
भवतु तत्र सम्पूर्णं तपो मे विभवार्जितम् ३१
गङ्गोवाच
एवमस्तु महाभाग तपस्ते विभवार्जितम्
स्वनाम्ना चात्र विख्यातिं न गन्तास्मि द्विजोत्तम ३२
महानदीति विख्यातिं गमिष्याम्यत्र सर्वदा
भगीरथेन चानीता यथार्थं पापनाशिनी ३३
तस्माच्छतगुणा प्रोक्ता यत्राहं दुरितापहा
सर्वदा तव कीर्तिस्तु स्थास्यत्यत्र महीतले ३४
भरद्वाज उवाच
इति दत्त्वा वरं तस्मै गङ्गा त्रैलोक्यपावनी
धृत्वाम्बुविग्रहं सा च ववाह पूर्वसागरम् ३५
महानदी महापुण्या महादेवप्रिया शुभा
द्वितीयं विग्रहं धृत्वा आस्ते गङ्गा तु या यया ३६
उत्कलेशं समासाद्य यावच्चित्रा महेश्वरी
तावच्चित्रोत्पलाख्याता सर्वपुण्यप्रदायिनी ३७
महानद्यां नरः स्नात्वा दृष्ट्वा वै पार्वतीहरम्
सर्वपापविनिर्मुक्तो गङ्गास्नानफलं लभेत् ३८

इति श्रीकपिलपुराणे महानदीमाहात्म्यं नाम

द्वितीयोऽध्यायः २

## अथ तृतीयोऽध्यायः

ऋषय ऊचुः
पुरा ते कथिता विप्र कृष्णार्कपार्वतीहराः
तेषां क्षेत्रं च तीर्थं च कथयस्व यथार्थतः १
भरद्वाज उवाच
आदौ कृष्णस्य माहात्म्यं माहात्म्यं क्षेत्रतीर्थयोः
संक्षेपेण प्रवक्ष्यामि शृणुध्वं भो द्विजोत्तमाः २
क्षेत्रं नीलाचलं पुण्यं दारुब्रह्मस्वरूपिणः
अत्र क्षेत्रे त्यजन् देहं नरो वैकुण्ठमाप्नुयात् ३
नीलाचलं महापुण्यं वरदाय प्रियं महत्
दशयोजनविस्तीर्णमुच्छ्रतं योजनार्द्धकम् ४
नानामुनिगणाकीर्णं विहङ्गैरुपशोभितम्
पादपैः सफलैर्युक्तं पुष्पैर्नाना विधैरपि ५
साक्षाद्वैकुण्ठरूपं तत्क्षेत्रं श्रीपुरुषोत्तमम्
क्षेत्राणामपि क्षेत्रं यत् तीर्थानामपि यद्वरम् ६
निद्रासमाधिसत्कर्मपरमानन्दनिर्वृतिः
सर्वकर्माणि धर्माणि धन्यानि पुरुषोत्तमे ७
यस्मिन् क्षेत्रे सदा सन्ति ब्रह्महत्यावतारगाः
जगन्नाथं च पश्यन्ति स्नात्वा तीर्थमहोदधौ ८
नीलाचलवरे विप्राः पुरा नीलाश्मरूपधृक्
इदानीं तु जगन्नाथो भाति दारवनीलया ९
ऋषय ऊचुः
पुरा कथं भरद्वाजो देवदेवो जगत्पतिः
नीलाश्माङ्गस्तु नीलाद्रौ साम्प्रतं च कथं पृथक् १०
भरद्वाज उवाच
संक्षेपेण प्रवक्ष्यामि तां कथां वै सनातनीम्

यांश्च श्रुत्वा पुनर्मोहं नैव गच्छन्ति मानवाः ११
आसीत्सत्ययुगे विप्रा इन्द्रद्युम्नो महीपतिः
स वै क्षीरसमुद्रेन्दुसमः शत्रुकुलान्तकः १२
देवदेवे जगन्नाथे भक्तिर्यस्य दृढा मता
यस्तु साक्षात् स्वयं विप्रा ब्राह्मणः पञ्चमस्तनुः १३
यदा श्रीभगवान् शंभुर्गृह्णातिस्म हिमाद्रिजाम्
तदा जघान सहसा ब्रह्मणः पञ्चमं शिरः १४
तदा प्रभृति भो विप्रा ब्रह्मा चैव चतुर्मुखः
छिन्नशिरा महाबाहुरिन्द्रद्युम्नेति विश्रुतः १५
यज्वा तपस्वी दान्तस्तु शान्तश्चातिथिपूजकः
वैष्णवः सत्यसम्पन्नो जितक्रोधो जितेन्द्रियः १६
एवमेष महीपालः चिन्तयामास चेतसि
विष्णुं जिष्णुं चतुर्बाहुं लोचनाभ्यां पिवाम्यहम् १७
इत्थं चिन्तयतस्तस्य महीपालस्य भो द्विजाः
स्वप्ने तु दर्शनं दत्त्वा विष्णुश्चेदं वचोऽब्रवीत् १८
श्रीभगवान् उवाच
इन्द्रद्युम्न महीपाल शृणु मद्वचनं हितम्
यच्छ्रुत्वा त्वं पुनर्मोहं नैव यास्यसि सुव्रत १९
लवणस्योदधेस्तीरे बालुकाभिः समावृते
तत्र नीलाचलं क्षेत्रं मम तिष्ठति मुक्तिदम् २०
रहस्यं दुर्लभं स्थानं स्थलं ब्रह्मादिदुर्लभम्
योगिनो वीतरागाश्च न जानन्ति मम स्थलम् २१
गोप्यं पुण्यप्रदं क्षेत्रं मत्पूज्यं पुरुषोत्तमम्
प्रलये च महीपाल नष्टे स्थावरजङ्गमे २२
विश्वेऽस्मिन् दुःखिते चैव कारुण्यकजलाप्लुते
महत्क्षेत्राणि पुण्यानि तीर्थान्यायतनानि च २३
आश्रमाणि च रम्याणि वैकुण्ठक्षीरसागरम्
एतानि संपरित्यज्य सुस्थानानि महीपते २४

वटपत्रपुटस्थोऽहमस्मि श्रीपुरुषोत्तमे
तत्र गच्छ महीपाल प्रयत्नेन सुसंयतः २५
द्रक्ष्यते त्वं तपस्तप्त्वा इन्द्रनीलतनुं हि माम् २६
रोहिरायाख्यं महत्तीर्थं मत्पार्श्वे चैव तिष्ठति
तत्र भक्त्या नरः स्नात्वा मद्देहे लीयते ध्रुवम् २७
एवं निगदिते तस्मिन् केशवे केशिसूदने
इन्द्रद्युम्नस्य राजर्षेः स्वयं निद्रा बभंज ह २८
ततः सुप्तोत्थितो राजा न दृष्ट्वा श्यामसुन्दरम्
रुरोद भृशदुःखार्तः कृष्ण कृष्णेति कीर्तयन् २९
देवानां ब्राह्मणानां च किं मयापकृतं कृतम्
पश्यतो मे गतः कुत्र घनश्यामो निरञ्जनः ३०
जलार्थमागता गावः किं मे नियमिताः पुरा
पश्यतो मे गतः कुत्र शङ्खचक्रधरो हरिः ३१
चूतनिम्बकदम्बाद्याः पादपाश्छादिता मया
पश्यतो मे गतः कुत्र पीतवासा गदाधरः ३२
वैश्वदेवस्य वेलायां नार्चितश्चातिथिर्मया
पश्यतो मे देवदेवो गतः कुत्र जगत्पतिः ३३
परनिन्दा कृता किं मे वस्त्रं चापि हृतं मया
पश्यतो मे गतः कुत्र सिन्धुजारतिदायकः ३४
मया हता ब्राह्मणाश्च गावः किं वा सहस्रशः
पश्यतो मे गतः कुत्र शंकरार्द्धशरीरकः ३५
किं मे न रक्षिताः शीघ्रं प्रजा दुःखपरिप्लुताः
पश्यतो मे गतः कुत्र राघवो रावणान्तकः ३६
किं मे लोष्ठं तृणं काष्ठं क्षिप्तं कूपे जलाशये
पश्यतो मे गतः कुत्र तेन पापेन केशिहा ३७
सभ्याः किं नार्चिताः काले तर्पणं न कृतं मया
पश्यतो मे गतः कुत्र गोपिकानन्दवर्द्धनः ३८
इत्थं विलपतस्तस्य इन्द्रद्युम्नस्य धीमतः

आययुर्मन्त्रिणः पौरा श्रीमन्तश्च पुरोहिताः ३९
ते दृष्ट्वा रोदनं तस्य इन्द्रद्युम्नस्य भूपतेः
प्रोचुरित्थं वचः सर्वे भृशं दुःखितमानसाः ४१
मन्त्रिण ऊचुः
महीपते महाबाहो किमर्थं रुदितं त्वया
कथयस्व यथार्थं नः साधयामो न संशयः ४२
इत्थमाराधितो भूयो मन्त्रिभिश्च पुरोहितैः
तानुवाच प्रयत्नेन हर्षगद्गदया गिरा ४३
इन्द्रद्युम्न उवाच
स्वप्ने दृष्टो जगन्नाथः शङ्खचक्रगदाधरः
वनमाली पीतवासा धनश्यामो रमापतिः ४४
स उवाच हृषीकेशो मां स्वप्नपापकारिणम्
गच्छ भूप तपस्तप्त्वा द्रक्ष्यसे नीलपर्वते ४५
इदानीं च गमिष्यामि नीलाद्रिं निर्मलप्रदम्
कुरुध्वं मन्त्रिणोऽदीर्घं संभारं मम सम्मतम् ४६
स्वीकृत्य सर्वपौराश्च मन्त्रिणश्च पुरोहिताः
आविवेश ततो राजा ययुः स्वं स्वं पुरं ततः ४६
भरद्वाज उवाच
एतस्मिन्नन्तरे विप्रा यमस्तु रविनन्दनः
तत्क्षणे हृतकामस्तु नीलपर्वतमाविशत् ४८
दुःखितो यमुनाभ्राता वेपमानः पुनः पुनः
स्थित्वाग्रे वासुदेवस्य वाक्यमेतदुवाच ह ४९
यम उवाच
नमोऽस्तु विष्णवे तुभ्यं सर्वलोकहितात्मने
रजस्तमोविमुक्तस्त्वं स्वप्रकाश नमोऽस्तु ते ५०
सृष्टोऽहं प्रेतराजस्ते देवदेव जगत्पते
किं करोमि महाबाहो त्वं वै दीनार्तनाशनः ५१
श्रीभगवान् उवाच

किं ते दुःखं समुत्पन्नं कथयस्व ममाग्रतः
तं दुःखं छेदयिष्यामि सत्यं च रविनन्दन ५२
यम उवाच
कृतं देव त्वया सत्यमिदानीं कथयाम्यहम्
तत्कुरुष्व महाबाहो शृणुष्व मधुसूदन ५३
इन्द्रद्युम्नस्तु नृपतिरागच्छति बलान्वितः
मुक्तिं यास्यन्ति ते सर्वे किं करोमि वद प्रभो ५३
परित्यज्य जगन्नाथं नीलेन्द्रानिलाङ्गगम्
पातालं यातु तत्तीर्थं रोहि याख्यं च केशव ५४
यस्मिन् स्नात्वा महाबाहो काको मुक्तिमवाप ह
यद्रूपं च समालोक्य शवोऽपि चाजरामरः ५६
श्रीभगवान् उवाच
सत्यमुक्तं त्वया पूर्वमिदानीं किं करोम्यहम्
यदुक्तं ते वचः सर्वमेवं भवतु भास्करे ५७
विश्वकर्मा ततः शीघ्रं प्रतिमात्रयमकल्पयत्
भरद्वाज उवाच
अज्ञां प्राप्य जगन्नाथात्स्वगृहं भास्करिर्ययौ
देवदेवोऽपि भगवान्नास्ते नीलाचले शुभे ५८

इति श्रीकपिलपुराणे यमवरदानं नाम
तृतीयोऽध्यायः ३

अथ चतुर्थोऽध्यायः

नीलशैले जगन्नाथं मन्त्रिभिः सह भूमिपः
पुरोहितैः पुराणज्ञैः प्रजाभिश्चैव वारणैः १
गच्छन् मार्गे ददर्शाथ वनैकाग्रे शिरोत्तमम्
पूजयित्वा च ते नत्वा गतवान् नीलपर्वतम् २
स्वर्णकूटात्परं नीलशैलो हि भुवि राजते
एत्य तत्र ददर्शासौ शङ्खचक्रगदाधरम् ३

समीपं तस्य संप्राप्य राजासौ दीनमानसः
करं संपुटिकां बद्ध्वा नारदं पर्यपृच्छत् ४
इन्द्रद्युम्न उवाच
स्फुरते दक्षिणं चक्षुर्वामाङ्गं तु प्रकम्पते
ममैतत्कारणं ब्रूहि त्रिकालज्ञस्त्वमेव हि ५
नारद उवाच
इन्द्रद्युम्न महाबाहो इन्द्रनीलतनुर्हरिः
पातालं गतवानद्य रोहिण्याख्यं गतस्तथा ६
इन्द्रद्युम्नस्तु तच्छ्रुत्वा वज्रपातसमं वचः
पपात धरणीपृष्ठे गिरेः शृङ्गमिवापरम् ७
तं दृष्ट्वा दुःखिताः सर्वे मन्त्रिणश्च पुरोहिताः
शीघ्रमुन्नामयामासुर्नृपतिं पतितं भुवि ८
एतस्मिन्नन्तरे विप्राः नारदो मुनिपुङ्गवः
उवाच वचनं रम्यं राजानं दीनमानसम् ९
नारद उवाच
ब्रह्मणा प्रेषितोऽहं च तवान्ते नात्र संशयः
इदानीं तु जगन्नाथः पुनस्स्थानं करिष्यति १०
इत्युक्ते नारदेनैव चक्रुः कोलाहलं जनाः
शङ्खचक्राङ्कितततनुर्दारुरुत्प्लवते द्विजाः ११
जनानां तद्वचः श्रुत्वा स नृपो हर्षमानसः
तपोधनं करे धृत्वा कृताञ्जलिपुटोऽग्रतः १२
राजोवाच
नमस्ते ब्रह्मणे तुभ्यं बल्लकीपाणये नमः
गत्वा दृष्ट्वा समानीतो दारू राजा जनैः सह १३
वलभद्रो जगन्नाथः सुभद्रा च सुदर्शनम् १४
वनमाली पीतवासाः शङ्खचक्रधरो हरिः
हलपाणिः गदापाणिर्बलभद्रो बलान्वितः १५
सुभद्रा पद्महस्ता च स्तम्भरूपं सुदर्शनम्

एताश्च प्रतिमाः कृत्वा स्थापयित्वात्र मण्डपे १६
ब्रह्मलोकं महाबाहुः प्रतिष्ठार्थं समाययौ
गत्वा च दृष्टवांस्तत्र ब्रह्मा हि कुशलाञ्छनम् १७
उवाच वचनं नत्वा कृताञ्जलिपुटोऽग्रतः
नमस्ते ब्रह्मणे तुभ्यं प्रजानां पतये नमः
त्राहि मां करुणागार पूरयस्व मनोरथम् १८
ब्रह्मोवाच
साधु पुत्र महाबाहो वैष्णवस्त्वादृशो भुवि
नातीतो वर्तमानश्च न भविष्यति मे मतिः १९
अधुनाऽहं गमिष्यामि तवार्थं चक्रपाणिनः
प्रतिष्ठां च करिष्यामि गच्छ शीघ्रं महीपते २०
भरद्वाज उवाच
ब्रह्मणो वचनं श्रुत्वा राजा हृष्टमना भवत्
ब्रह्मलोकात्परिभ्रष्टो भूमिलोकं समाविशत् २१
आगत्य दृष्टवांस्तत्र गणं नृपतिकुञ्जरम्
विगृह्य तेन राजेन्द्रो जग्राह हरिमव्ययम् २२
ततो ब्रह्मा ब्रह्मलोकाद्भूमिलोकं समाविशत्
आगत्य क्षिप्रं भूलोकं प्रतिष्ठां कृतवांस्ततः २३
जितं त इति मन्त्रेण अस्तुवन् देवतागणाः
आविर्बभूव भगवान् शङ्खचक्रधरो हरिः २४
प्रीतो विष्णुरुवाचेदमिन्द्रद्युम्नं महीपतिम्
श्रीभगवानुवाच
पुण्यक्षेत्राणि तीर्थानि परित्यज्य महीपते
अत्रैव सर्वभावेन स्थास्येऽहं वै परार्द्धकम् २५
इन्द्रद्युम्न महीपाल शृणु मद्वचनं हितम्
स्नानं त्वं च प्रकुर्वीथा गुडिचाख्यं महोत्सवम् २६
स्नानकाले नरा ये मां द्रक्ष्यन्ति च मुदान्विताः
सर्वपापविनिर्मुक्तास्ते यान्ति भुवनं मम २७

तूष्णीं बभूव भगवानिदमुक्त्वा जनार्दनः
ब्रह्मापि ब्रह्मलोकं च गतवान् भो द्विजोत्तमाः २८
इन्द्रद्युम्नो हि राजर्षिर्देवदेवं जगत्पतिम्
पूजयित्वा प्रयत्नेन ततो मुक्तिमवाप सः २९
एवं पुरा जगन्नाथ इन्द्रनीलस्वरूपधृक्
दारुब्रह्मस्वरूपेण भातीदानीं जगत्पतिः ३०

इति श्रीकपिलपुराणे इन्द्रद्युम्ननृपमोक्षप्राप्तिर्नाम
चतुर्थोऽध्यायः ४

अथ पञ्चमोऽध्यायः

भारद्वाज उवाच
तस्मिन् क्षेत्रे द्विजश्रेष्ठा ये वसन्ति नराः किल
ते यान्ति विष्णोः सान्निध्यं भासमानाः सुतेजसः १
महोदधौ नरः स्नात्वा दृष्ट्वा श्रीपुरुषोत्तमम्
ब्रह्महत्यादिपापानि क्षयित्वा मोक्षमाप्नुयात् २
गङ्गायात्रासरस्वत्याः गोदावर्य्याश्च भो द्विजाः
यत्तत्फलमवाप्नोति अचलाम्बुधिदर्शनात् ३
मार्कण्डेयं च तत्रैव तीर्थं त्रैलोक्यपावनम्
यत्र स्नात्वा सुराः सर्वे स्वपदं प्राप्नुयुः पुरा ४
मार्कण्डेयवटं विप्राः स्वयं कृष्णेन निर्मितम्
हितार्थं च महर्षीणां मार्कण्डेयस्य धीमतः ५
यत्र स्नात्वा नरश्रेष्ठो दृष्ट्वा शैलसुतापतिम्
कोटिजन्मकृतं पापं तत्क्षणादेव नाशयेत् ६
तस्मान्नीलाचले विप्रा देवराजस्य दक्षिणे
यमेश्वर इति ख्यातो यमसंयमतत्परः ७
यमेश्वरं समालोक्य पूजयित्वा च भक्तितः
नरः शिवमवाप्नोति यमदण्डविवर्जितः ८
तस्याः पश्चिमदिग्भागेऽलावुनाथसंज्ञकः

समाश्रित्य नरस्तं च मनोरथमवाप्नुयात्  ९
अपुत्रः पुत्रवांश्चैव व्यङ्गः कन्दर्परूपधृक्
भवत्येवं महीपाल तस्य लिङ्गस्य सेवनात्  १०
कपालमोचनं नाम लिङ्गं सन्निहितं प्रभोः
तद्दृष्ट्वाविधिवद्भक्त्या ब्रह्महत्याद्विमुच्यते  ११
भक्षणाद्दर्शनाच्चैव द्विजातीनां विमुक्तिदम्
द्विजाश्च सुपचायान्नं यत्र भुञ्जन्नपूपकम्  १२
तस्मात्सर्वप्रयत्नेन गन्तव्यः पुरुषोत्तमः
द्रष्टव्यश्च जगन्नाथ आत्मनो मुक्तिकारणात्  १३
वटमूले वटेशश्च सर्वपापप्रणाशनः
तस्य दर्शनमात्रेण सर्वपापाद्विमुच्यते  १४
वाराणस्या समं ह्यस्ति क्षेत्रमेकं न किंचन
पुरुषाख्यसमं क्षेत्रं नास्ति त्रैलोक्यमण्डले  १५
सर्वेषां चैव क्षेत्राणां राजा श्रीपुरुषोत्तमः
देवानामपि सर्वेषामुत्तमः पुरुषोत्तमः  १६
किं चात्र बहुनोक्तेन भाषितेन पुनः पुनः
सत्यं सत्यं पुनः सत्यं क्षेत्रं न पुरुषोत्तमात्  १७
पुरुषोत्तममाहात्म्यं वक्तुं वर्षशतैरपि
न समर्थो द्विजश्रेष्ठाः किमन्यच्छ्रोतुमर्हथ  १८
ऋषय ऊचुः
सम्यक् प्रोक्तं त्वया क्षेत्रं मुक्तिदं पुरुषोत्तमम्
कथयस्व तस्मिन् क्षेत्रे किं कर्तव्यं द्विजोत्तमाः  १९
पूर्वमुक्तं त्वया विप्रा यमेशो मुक्तिदायकः
इन्द्रादिदेवताः सर्वे तत्र सन्ति तपस्विनः  २०
ईषत् पुण्यं भवेत्तत्र मेरुतुल्यं न संशयः
कुरुध्वं तत्र भो विप्रास्तपो मुक्तिप्रदायकम्  २१
भरद्वाज उवाज
तत्स्थानं सुमहत्पुण्यं देवादीनां च दुर्लभम्

बहुपुण्येन देवाश्च तत्र सन्ति महर्षयः २२
नानापुष्पसमायुक्तं यूपवृक्षविराजितम्
पुन्नागैर्नारिकेलैश्च पूरितं तत् समन्ततः २३
करवीरैः कर्णिकारैश्च पादपैश्चम्पकैस्तथा
मल्लिकायूथिकाभिश्च जातिभिः परिपूरितम् २४
तपसस्तु महत्स्थानं मुनीन्द्रैः परिकीर्तितम्
ये यजन्ति नरास्तत्र शान्तास्ते पूतमानसाः २५
यमेश्वरप्रसादेन मन्त्रसिद्धिमवाप्नुयुः
एवं श्रीपुरुषाख्यस्य महात्म्यं गदितं मया २६

इति श्रीकपिलपुराणे पुरुषोत्तममहात्म्यवर्णनं नाम
पञ्चमोऽध्यायः ५

अथ षष्ठोऽध्यायः

ऋषय ऊचुः
पुरा ते गदिता विप्राः कृष्णार्कपार्वतीहराः
इदानीं भास्करस्येह माहात्म्यं वद नः प्रभो १
भरद्वाज उवाच
कथयामि रहस्यं वो पावनं क्षेत्रमुत्तमम्
यत्र गत्वा पुरा विप्राः शाम्बः कुष्टान्मुमोच ह २
ऋषयः ऊचुः
कुतः समागतः शाम्बः कमाराध्य मुमोच ह
किमर्थं तस्य देहे च वद कुष्टं बभूव ह ३
भरद्वाज उवाच
दुष्टानां विग्रहार्थाय शिष्टानां पालनाय च
द्वापरे कृष्णवने विप्राः श्वेतगङ्गेति विश्रुता ४
श्वेतमाधवरूपेण तत्रास्ते भगवान् प्रभुः
मत्स्यमाधवस्तत्रैव वेदवेदाङ्गपारगः
उभयोर्दृष्टियोगेन कीटो मुक्तिमवाप्नुयात् ५

ब्रह्महा च सुरापश्च गोघ्नो वापि च घातकः
ते सर्वे मुक्तिमायान्ति मध्ये च श्वेतमत्स्ययोः ६
श्वेतायां च नरः स्नात्वा दृष्ट्वा च श्वेतमत्स्यकौ
पापानि च परित्यज्य श्वेतद्वीपं व्रजेत् ध्रुवम् ७
इन्द्रद्युम्नसरस्तत्र इन्द्रेण समपूजितम्
तत्र साक्षान्नरो विप्रा इन्द्रेण सह मोदते ८
तत्रस्थं नरसिंहं च शङ्करं नीलकन्धरम्
दृष्ट्वा नत्वा पूजयित्वा ज्योतिर्लोकं व्रजेन्नरः ९
हरिशङ्करयोर्मध्ये यो दद्यात्पिण्डमुत्तमम्
पितृणामुद्धृतिं कृत्वा रविलोकं व्रजेन्नरः १०
पुण्यं कल्पवटं तत्र दारुब्रह्मसमीपतः
यस्य छायां समाक्रम्य ब्रह्महत्याद् विमुच्यते ११
कृत्वा प्रदक्षिणं तस्य यस्तु तं पूजयेत् वटम्
तस्य जन्मशतोर्द्धृतं दोषं च क्षमते हरिः १२
मङ्गलावटमूले च देवीमङ्गलदायिनी
तां दृष्ट्वा पूजयित्वा च मोहबन्धाद्विमुच्यते १३
वटस्य पश्चिमे भागे विमला विमलप्रदा
तस्या दर्शनमात्रेण विद्यावान् जायते नरः १४
तदग्रे नरसिंहस्तु कोटिसूर्य्यसमप्रभः
दैत्येन्द्रोऽपि च तत्रास्ते दर्शनान्मुक्तिदो मतः १५
तस्याग्रे वासुदेवश्च शेषशायी गदाधरः
शङ्खचक्राङ्कितो भूत्वा वनमालाविभूषितः १६
क्षीरशायी जगन्नाथः साक्षादत्र स्थितः प्रभुः
लक्ष्मीपादतले चास्ति कर्णमूले सरस्वती १७
नाभिपद्मोपरि ब्रह्मा वेदवेदाङ्गपारगः
कमण्डलुधरो देवश्चतुर्बाहुश्चतुर्मुखः १८
ईश्वरः पार्वतीनाथः शेषदेहत्वमाप्तवान्
यस्मादभिन्नपुरुषस्तस्मादेकत्वमाप्तवान् १९

अचलोपरि देवेशः पुरुषोत्तमसंज्ञकः
विराजते विभुः साक्षादनन्तपुरुषोत्तमः २०
पुरुषोत्तमनामैतत्क्षेत्रं श्रीपुरुषोत्तमम्
नरो मुक्तिमवाप्याशु दृष्ट्वा श्रीशेषशायिनम् २१
तत्र दारुस्वरूपस्य निर्माल्यं पापनाशनम्
अन्नाद्यपूपकं चैव यदन्यत् प्राप्यते परम् २२
जगन्नाथस्य नैवेद्यं महापातकनाशनम्
भक्षणात्फलमाप्नोति कपिलाकोटिदानजम् २३
किं तेन तन्न कृतं पुण्यं किं तेन न कृतं तपः
भक्षितं येन अन्नाद्यं दारुब्रह्मस्वरूपिणः २४
जगन्नाथो यथा साक्षाद्दर्शनान्मुक्तिदो ध्रुवम्
तथैव मुक्तिदं ह्यन्नं जगन्नाथस्य भोद्विजाः २५
दिशान्तरगतं वापि विष्णुस्त्ववततार ह
सोऽपि कृष्टो जगन्नाथो गोपीभिश्च समावृतः २६
बाल्यकाले स्थितो गोपे ततः कंसं जघान ह
मथुरायां कृतो राजा उग्रसेनो महामनाः २७
कालनेमिभयात्तस्मान्निर्गतो द्वारकापुरीम्
तस्यां स्थितश्च श्रीकृष्णः पाण्डवानां हितप्रदः २८
यौधिष्ठिरे धर्मयज्ञे गतवान् हस्तिनापुरम्
श्वेतातपत्रं दत्त्वा स आगतो द्वारकापुरीम् २९
एवं पलायतस्तस्य जगन्नाथस्य शार्ङ्गिणः
सुतः शाम्बोऽभवद्विप्रा द्वितीयो रतिनायकः ३०
यथा कृष्णस्तथैवासौ नीलजीमूतसन्निभः
शङ्खचक्राङ्कितभुजः पीतवासाः सुलोचनः ३१
जलक्रीडारुचिः सोऽथ योषिद्भिश्च समावृतः
चक्रपाणेरविज्ञातो गतो जाम्वतीसुतः ३२
तं दृष्ट्वा योषितः सर्वा ययुर्मोहं च विह्वलाः
तासां च स्कन्दते रेतश्चक्रे निन्दां तदा हरिः ३३

धिक् च भवतु नारीणामसतीत्वं च धिक् प्रधिक्
पुत्रं दृष्ट्वा कथं सर्वा ययुर्मोहं पुनः पुनः ३४
ततः शाम्बमुवाचाथ ईषत्क्रोधसमन्वितः ३५
श्रीभगवान् उवाच
मातॄणां स्कन्दते रेत आगते त्वयि पुत्रक
इदानीं तव देहे च कुष्टं भवतु सर्वतः ३६
एवं निगदिते कृष्णे कुष्टं सर्वाङ्गकेष्वभूत्
शाम्बोऽपि वेपमानः सन् पितरं वाक्यमब्रवीत् ३७
अपराधे कृते पुत्रे क्षमते जनकः प्रभो
इदानीं किं करिष्यामि शापमुक्तिं वदस्व ह ३८
भगवान् उवाच
मैत्रेयाख्यं वनं गत्वा तपस्तप्त्वा जितेन्द्रियः
प्रसादयित्वा छायेशं ततो मुक्तिं गमिष्यसि ३९
भरद्वाज उवाच
इति श्रुत्वा वचस्तस्य शार्ङ्गिणो रुक्मिणीपतेः
एकाकी च जगामाशु शाम्बो दुःखपरिप्लुतः ४०
गत्वा तत्र प्रयत्नेन तपस्तेपे सुदारुणम्
शान्तो दान्तो निराहारो वायुभक्ष्यो जितेन्द्रियः ४१
शाम्बो द्वादशवर्षाणि सूर्य्यध्यानपरायणः
पूजयंस्तु स्तुवन् गायन् सूर्यसूर्येति कीर्तयन् ४२
दिवाकर नमस्तेऽस्तु प्रभाकर नमोऽस्तु ते
त्राहि मां करुणागार व्यङ्गं च पतितं भूवि ४३
इति मन्त्रं स्तुवन् गायन् शाम्बः कृष्णात्मजो द्विजाः
पपात सहसा भूमौ पुनः पुनरुदीरयन् ४४
गते च कतिचित्काले भास्करो भक्तवत्सलः
उवाच वचनं स्वप्ने शापनिर्मुक्तकारणम् ४५
श्रीसूर्य उवाच
अत्र तिष्ठ महाबाहो दर्शयामि स्वकां तनुम्

तां दृष्ट्वा मुच्यते रोगान्नान्यथा शृणु शाम्वक ४६
यदा जाम्बवतीसूनो पापमुक्तिमपेक्षसे
एतानि मम नमानि कीर्तयस्व निरन्तरम् ४७
भास्करो भगवान् सूर्यश्चित्रभानुर्विभावसुः
यमतातोंऽशुमाली च यमुनाप्रीतिदायकः ४८
दिवाकरो जगन्नाथः सर्वसाक्षी विभाकरः
लोकचक्षुः स्वयम्भूश्च छायारतिप्रदायकः ४९
तिमिरारिर्ग्रहधरो लोकत्रयप्रकाशकः
भक्तबन्धुर्दयासिन्धुः कर्मसाक्षी परात्परः ५०
एकविंशतिनामानि यः पठेदुदिते मयि
तस्य शान्तिं प्रयच्छामि सत्यं सत्यं वदाम्यहम् ५१
इत्युक्त्वा गतवान् सूर्यः शाम्बो निद्रां च मुक्तवान्
ततः प्रभातसमये स्नानार्थं प्रययौ नदीम् ५२
चन्द्रभागां महापुण्यां देवलोकप्रदायिनीम्
तत्र गत्वा च साम्बोऽसौ द्विभुजां पद्मलाञ्छिताम् ५३
प्रतिमां पङ्कजस्थां च जलमध्ये ददर्श सः
दृष्ट्वा तां परिवृढां च सरेणान्तिकमानयत् ५४
मार्जयित्वा वपुस्तस्याः प्रक्षाल्य सलिलेन च
गृहीत्वा प्रतिमां तां च ययौ शाम्बो महामतिः ५५
प्रसादं कारयित्वा च स्थापयामास सत्वरम्
तां पूजयित्वा विधिवद्भक्त्या नत्वा परं ततः ५६
विमुक्तरोगः सहसा ययौ वाराणसीं पुरीम् ५७
भरद्वाज उवाच
एवं पुरा गतः शाम्बस्तपस्तत्वा दिवाकरम्
अर्चयित्वा प्रयत्नेन ततः कुष्टाद्व्यमुच्यत ५८
तत्र ये स्थातुमिच्छन्ति वीरतरागा विकल्मषाः
तेषां मनोरथफलं पूरयेद्भगवान् रविः ५९
मैत्रेयाख्ये वने रम्ये ये त्यजन्ति कलेवरम्

पापानि च परित्यज्य ज्योतिर्लोकं व्रजन्ति ते  ६०
रविक्षेत्रे नरा ये च रविवारे समाहिताः
भक्त्या पश्यन्ति च रविं ते गच्छन्ति रवेर्गृहम्  ६१
मैत्रेयाख्ये वने ये च अमृताश्च पुनर्भवाः
देवलोकं समासाद्य रविणा सह मोदते  ६२
तत्र श्रीमङ्गलं तीर्थं देवानां मङ्गलप्रदम्
मङ्गले च नरः स्नात्वा मङ्गलं प्राप्नुयुर्ध्रुवम्  ६३
तत्र श्रीशाल्मलीभाण्डं तीर्थं त्रैलोक्यपावनम्
सर्वपापहरं गुह्यं सिद्धगन्धर्वसेवितम्  ६४
नानामुनिजनाकीर्णं सर्वेषां मुक्तिदायकम्
यत्र स्नात्वा नरः साक्षाद्रविदीधितिमाप्नुयात्  ६५
स्नात्वा श्रीशाल्मलीभाण्डे दृष्ट्वा छायापतिं ततः
अघौघं नाशयित्वा च आदिलोकं वसेन्नरः  ६६
सूर्य्यगङ्गाजले स्नात्वा सूर्य्यलोकं व्रजेन्नरः
सूर्य्यगङ्गासमं तीर्थं नास्ति नास्ति महीसुराः  ६७
महोदधौ नरः स्नात्वा सर्वपापाद्विमुच्यते
सर्वतीर्थवरश्चासौ सागरः सरितां पतिः  ६८
रामेश्वरस्तु तत्रैव वेलायां च नदीपतेः
श्रीरामः पूजयामास प्राणिनां हितकारणात्  ६९
रामेश्वरं प्रयत्नेन येऽर्चयन्ति नरोत्तमाः
तेषामिष्टवरं विप्रा रामचन्द्रः प्रयच्छति  ७०
गन्धैः पुष्पैश्च नैवेद्यैर्येऽर्चयन्ति महेश्वरम्
ते यान्ति शिवसालोक्यं विप्रास्तेन विराजिताः  ७१
चन्द्रभागा जले तत्र ये स्नान्ति विधिपूर्वकम्
चन्द्रतुल्यवपुर्धृत्वा चन्द्रलोकं व्रजन्ति ते  ७२
तत्र चार्कवटो नाम कल्पवृक्षस्तु तिष्ठति
नानामुनिजनाकीर्णो विहगैरुपशोभितः  ७३
अच्छेद्यश्चाप्यवध्योऽयं वटो मुक्तिप्रदो ध्रुवम्

प्राणिनां च हितार्थाय सूर्यः साक्षाच्च पादपः ७४
तत्र वृक्षतले ये च जपन्ति मन्त्रमुत्तमम्
त्रिपक्षाभ्यन्तरे मन्त्रः साधकाभीष्टसिद्धिदः ७५
भूपावर्कवटे विप्राः स्वर्लोके नन्दनं स्मृतम्
तत्र सिद्धगणाः सन्ति सत्यं सत्यं वदामि वः ७६
तत्र ध्यायन्ति ये विष्णुं तेषां विष्णुः प्रसीदति
वटच्छायां च ये सन्ति ते सिद्धाश्च न संशयः ७७
विजयां दशमीं प्राप्य येऽर्चयन्ति दिवाकरम्
तेषां विमुक्तपापानां सर्वत्र विजयो भवेत् ७८
मैत्रेयाख्ये वने पुण्ये रथयात्रामहोत्सवम्
ये पश्यन्ति नरा भक्त्या लीयन्ते स्वतनौ हरेः ७९
एवमादिगुणाः सन्ति मैत्रेयाख्ये वनोत्तमे
न सामर्थ्यं द्विजश्रेष्ठाः वक्तुं वर्षशतैरपि ८०
किंचित्प्रोक्तं मया विप्रा भवतां हितमुत्तमम्
वरेण्यं परमं पुण्यं किमन्यच्छ्रोतुमर्हथ ८१
इति श्रीकपिलपुराणे मैत्रेयवनमाहात्म्यं नाम
षष्ठोऽध्यायः ६

अथ सप्तमोऽध्यायः

ऋषय ऊचुः
इदानीं कथयास्माकं पार्वतीक्षेत्रमुत्तमम्
तत्प्रसादाद्भविष्यामः कृतार्था नात्र संशयः १
भरद्वाज उवाच
कथयामि महापुण्यं विरजाख्यं सुनिर्मलम्
यत्क्षेत्रं सृष्टिरक्षार्थं ब्रह्मणा च कृतं पुरा २
तस्मिन् क्षेत्रे द्विजश्रेष्ठा विरजा विरजप्रदा
विरजामुखमालोक्य रजःप्रक्षालनं भवेत् ३
यत्र श्रीविरजादेवी भुक्तिमुक्तिप्रदायिनी

साधकानां हितार्थाय विरजा सा कलौ स्थिता ४
दशवर्षसहस्राणि यो वा पूजयते हरम्
तत्फलं समवाप्नेति विरजाऽऽलोकने नरः ५
कुरुक्षेत्रे हरिद्वारे यत्फलं लभते नरः
तत्फलं समवाप्नोति नान्यथा भो द्विजोत्तमाः ६
वराहरूपो भगवान् तत्रास्ते मुक्तिदायकः
तं दृष्ट्वा पूजयित्वा च विष्णुलोकमवाप्नुयात् ७
आखण्डलस्तु तत्रास्ते पार्वतीशो जगद्गुरुः
समालोक्य प्रयत्नेन यमदण्डं च खण्डति ८
यत्राखण्डलदेवस्तु तत्र मुक्तिर्न संशयः
तत्र स्नात्वा च गच्छन्ति श्रीविष्णोः परमं पदम् ९
आखण्डलं सामासाद्य कुष्टी कुष्टात् प्रमुच्यते
अपुत्रा चैव या नारी सा ध्रुवं सुतमाप्नुयात् १०
आखण्डल नमस्तुभ्यं सिद्धानां सिद्धिदायक
अखण्डमण्डलाकारकारणाशेषकारणात् ११
अनेन मन्त्रयोगेन यः पश्येत् पार्वतीपतिम्
सर्वपापविनिर्मुक्तः शिवलोके महीयते १२
क्रोडाखण्डलयोर्मध्ये देवानां दुर्लभप्रदे
मुक्तिं गच्छन्ति कीटाद्याः किं पुनर्मानवा मृताः १३
गुरुहा ब्रह्महा गोघ्नः सुरापो विष्णुनिन्दकः
तत्र देहं त्यजन् विप्रा वैकुण्ठं लभते ध्रुवम् १४
तत्र मुक्तीश्वरं लिङ्गं मुक्तिदं पापनाशनम्
यैर्दृष्टं च पुनर्विप्रा ययुर्मुक्तिं त्वरान्विताः १५
तत्र श्रीविरजा क्षेत्रे देव्या ईशानकोणतः
गयानाभिः महापुण्या पितृणां मुक्तिदायिका १६
तत्र पिण्डं प्रयच्छन्ति नरा ये वीतकल्मषाः
पितॄनुद्धृत्य नरकात् ते व्रजन्ति पदं हरेः १७
तत्र वैतरणी देवी नदी मुक्तिप्रदायिनी

गङ्गादेवी त्वसौ विप्रा सत्यं सत्यं न संशयः १८
वैतरणी महापुरया भुक्तिदा मुक्तिदा नृणाम्
महापातककोटिघ्नी सुकृद्दर्शनमात्रतः १९
तस्यां स्नात्वा नरश्रेष्ठो दृष्ट्वा श्रीदंष्ट्रिणं हरिम्
कुलकोटिसमायुक्तो व्रजेद्विष्णुपुरीं द्विजाः २०
त्रिलोचनस्तु तत्रास्ते भवपापविमोचनः
तं दृष्ट्वा विधिवत्पूज्य त्रिलोचनमवाप्नुयात् २१
त्रिलोचनस्तु भो विप्राः तापत्रयविभञ्जनः
त्रैलोक्यस्य ह्यधिष्ठाता तं नरः कोऽपि नाश्रयेत् २२
तत्र क्षेत्रवरे विप्राः कपिलं तीर्थमुत्तमम्
प्रसन्नसलिलं चैव मनोज्ञं चारुदर्शनम् २३
पितृपक्षे चतुर्दश्यां कापिले स्नाति यो नरः
तस्य तुष्टो भवेद् विप्राः शैलेन्द्रतनयापतिः २४
तीर्थे कापिलिके विप्रा विधिवत्स्नाति यो नरः
कपिलाकोटिजं पुरयं लभते नात्र संशयः २५
तत्रैव गोग्रहं तीर्थं मुनीन्द्रैरुपसेवितम्
तत्र स्नात्वा च विधिवद्गोलोकस्य फलं लभेत् २६
सोमतीर्थवरं चास्ते निर्मितं वै हिमांशुना
स्नात्वा तत्र नरः श्रेष्ठश्चन्द्रलोकं स गच्छति २७
तत्र भोगाननेकांश्च भुक्त्वा चन्द्रप्रसादताम्
भूमिलोकं समासाद्य राजा भवति वै ध्रुवम् २८
तत्र भक्तिं समुत्पाद्य देवदेवे महेश्वरे
सर्वं पापं परित्यज्य गच्छेद् विष्णुपुरं नरः २९
एवं श्रीसोमतीर्थं च माहात्म्यं गदितं मया
इदानीमद्य तीर्थानि शृणुध्वं कथयाम्यहम् ३०
कल्पाम्बुसंज्ञकं नाम तत्रास्ते विरजे द्विजाः
अल्पपुरयं भवेदत्र मेरुतुल्यं न संशयः ३१
तस्मिन्क्षेत्रे पुरा वृत्तं शृणुध्वं द्विजसत्तमाः

आसीत्सत्यश्च नृपतिर्मान्धाता नाम विश्रुतः ३२
यज्वाऽध्वरवरे देवं दाता भोक्ता प्रियम्वदः
क्षमाशीलो दयाशीलः सत्यवागनुसूयकः ३३
महीपतिरसौ गच्छन् निर्जने गहने वने
मृगयार्थं महाबाहुरेकाकी च परन्तपः ३४
ददर्श वनखण्डे चाजगरं लोमहर्षणम्
तं दृष्ट्वा घातयामास शरेणैकेन धीमतिः ३५
तस्य पत्नी च तं दृष्ट्वा स्वपतिं पतितं भूवि
दुःखशोकसमाविष्टा ददौ शापं नृपाय तम् ३६
अद्रोहकरणं क्रूर मत्पतिं प्राणवल्लभम्
जघ्निथ त्वं यतो भूप शृगालत्वं ततो व्रज ३७
तस्याः शापप्रभावेण शृगालत्वं ययौ नृपः
गत्वा वाचमुवाचेदं सर्पपत्नीं पतिव्रताम् ३८
राजोवाच
शापमुक्तिं वदाशुत्वं त्राहि मां द्रोहकारणम्
शृगालविग्रहं प्राप्य जीवतं नास्ति कारणम् ३९
सर्पपत्नी उवाच
यदा त्वं च वशिष्ठेन विरजाख्यं गमिष्यसि
तस्मिन्नन्यम्बुतीर्थे च स्नात्वा मुक्तिमवाप्स्यसि ४०
विरजाख्यं नृपश्रेष्ठ क्षेत्रं परमपावनम्
रम्यं पापापनोदं च स्वर्गतुल्यं न संशयः ४१
ब्राह्मणैः क्षत्रियैर्वैश्यैः समन्तादभिपूरितम्
नाना देवगणाकीर्णं देवदुन्दुभिनादितम् ४२
तित्तीडीशालतालैश्च नारिकेलैश्च खर्जुरैः
आम्रजम्बूपिप्पलैश्च पनसैरूपशोभितम् ४३
पापानां मुक्तिदं भूप विरजाख्यं सुनिश्चितम्
तत्रैव तव शापस्य विमुक्तिश्च भविष्यति ४४
तच्छ्रुत्वा हि शृगालश्च वेपमानः सुदुःखितः

वशिष्ठस्याश्रमं गत्वा त्राहि त्राहीत्युवाच ह ४५
श्रुत्वा शापं च तद्वाक्यं वशिष्ठः परमं तपः
आश्रमाद्धि वहिर्गत्वाऽब्रवीद्वाक्यं प्रियं च तम् ४६
वशिष्ठ उवाच
त्राहीति त्वं कथं ब्रूषे कस्मादागतवानिह
किं ते च भयमुत्पन्नं कथयस्व ममाग्रतः ४७
मृगयार्थं गतोऽरण्यं मान्धाताऽहं महीपतिः
तत्र दृष्ट्वा ह्यजगरं सहसा च हतो मया ४८
ततो मुने पतिव्रतया शप्तोऽहं तस्य भार्यया
शृगालो भव भूय त्वं यत्त्वया मत्पतिर्हतः ४९
कृपया च पुनः प्राह वशिष्ठस्याश्रमं व्रज
गत्वा श्रीविरजं तेन ततो मुक्तिश्च लभ्यते ५०
इदानीं त्राहि मां नाथ गच्छावो विरजं मुने
मां तत्र नीत्वा क्षिप्रं च नरकादुद्धर प्रभो ५१
भरद्वाज उवाच
तच्छ्रुत्वा वचनं तस्य वशिष्ठः करुणान्वितः
तेन श्रीविरजं क्षेत्रं जगामाशु तपोधनः ५२
तत्र गत्वा मुनीन्द्रोऽसौ तीर्थे कल्पाम्बुसंज्ञके
स्नापयित्वा प्रयत्नेन ददौ तस्मै स्वकां तनुम् ५३
मान्धाता च ततो गत्वा स्वराज्यं द्विजसत्तमाः
आकाशात् पुष्पवृष्टिश्च पपात धरणीतले ५४
मान्धाता च ततो गत्वा स्वराज्यं द्विजसत्तमाः
प्रजाश्च पालयामास धर्मेण विनयेन च ५५
वशिष्ठोऽपि महातेजाः शिष्यैः परिवृतस्ततः
सर्वपुण्यमयं रम्यं जगाम स्वाश्रमं हि तम् ५६
एवं तस्मिन् पुरा वृत्तं तीर्थे कल्पाम्बुसंज्ञके
श्रुतं मया द्विजश्रेष्ठाः सर्वं पापप्रणाशनम् ५७
अल्पं पुण्यं बहुतरं भावि कल्पाम्बुके द्विजाः

शृगालत्वं परित्यज्य एवं राजा विमुक्तवान्  ५८
यः पठेदिदमाख्यानं पुण्यं पापाहरं महत्
शृणुयादपि यत्नेन स पुण्यां लभते गतिम्  ५९
इदं श्रुत्वा जनाः सर्वे नमन्तु भुजगं सदा
मान्धाता भुजगं हत्वा ह्यवाप गतिमीदृशीम्  ६०
इति श्रीकपिलपुराणे शृगालविमुक्तो नाम
सप्तमोऽध्यायः  ७

अथाष्टमोऽध्यायः

ऋषय ऊचुः
अल्पाम्बुतीर्थमाहात्म्यं श्रुतमस्माभिरादरात्
तत्र गुह्यानि तीर्थानि श्रोतुकामा वयं मुने  १
भरद्वाज उवाच
तत्र मृत्युञ्जयं नाम तीर्थं देवगणैः स्तुतम्
मृकण्डुतनयो यत्र स्नात्वा मृत्युर्जिगीयते  २
मृत्युञ्जये तीर्थवरे यो नरः स्नानमाचरेत्
मृत्युञ्जयं समालोक्य सोऽपि मृत्युं जिघांसति  ३
क्रोडतीर्थं च तत्रास्ते परमं पावनं महत्
क्रोडरूपी जगन्नाथः साक्षात्तीर्थत्वमागतः  ४
तत्र स्नानं विधायाशु क्रोडदेहे च लीयते
इति मन्त्रं समुच्चार्य्य स्मरेन्मृत्युञ्जयं प्रभुम्  ५
तीर्थराज नमस्तुभ्यं कारुण्यक जलाप्लुत
अघौघादुद्धर त्वं मां मज्जन्तं पाहि मां प्रभो  ६
तत्रैव शुकतीर्थं च वासुदेवपदप्रदम्
तत्र स्नात्वा सकृल्लोको दीव्यलोकात्परं व्रजेत्  ७
तीर्थं सिद्धेश्वरं नाम सिद्धिदं सर्वकामदम्
एवं स्तुत्वा पयःपित्वा सिद्धाः सिद्धित्वमाययुः  ८
सिद्धेश्वरे सकृदेव मस्तके पातिते द्विजाः

तस्य तुष्टः प्रजानाथः सिद्धिं दद्याद्यथेप्सिताम् ९
सिद्धेश्वरे मनोज्ञे च प्रसन्नसलिले शुभे
स्नातं येन दिनैकं च स्नातं तेन जगत्त्रये १०
एवं बहुविधं तस्य पुरायं सिद्धेश्वरस्य च
सिद्धेश्वरे नरः स्नात्वा सिद्धिं प्राप्नोत्यसंशयम् ११
नानाविधानि तीर्थानि तत्र सन्ति द्विजोत्तमाः
नानाविधास्तथा देवा नानासिद्धगणास्तथा १२
यो व्रजेद्विरजःक्षेत्रे मधुमासे नरोत्तमः
आश्विने माधवे वापि तस्य सिद्धिर्भवेद्ध्रुवम् १३
दोलस्य स्थानं क्रोडं च तत्र पश्यन्ति ये नराः
ब्रह्महत्यादिपापानि क्षयित्वा मुक्तिमाययुः १४
भौमवारे चतुर्दश्यां वारे वाथ वृहस्पतेः
यः पश्येद्विरजं भक्त्या मनुष्यो भक्तिमाप्नुयात् १५
तत्र श्रीविरजाग्रे च यः पठेन् मन्त्रमुत्तमम्
स मन्त्रः सिद्धिदः तस्य सत्यं सत्यं द्विजोत्तमाः १६
तत्पृष्ठभागे यो नित्यं पूजयेत् सिन्धुजापतिम्
स्थरिडले प्रतिमायां व शालग्रामेऽथवा शुभे १७
गन्धैः पुष्पैश्च नैवेद्यैर्धूपैर्दीपैः स्तवैर्स्तथा
मालाभिर्वाऽपि ताम्बूलैः पूजयेच्च जनार्दनम् १८
षरामासाभ्यन्तरे देवो ददाति वरमीप्सितम्
प्राप्य सिद्धिं मृते चैव गच्छेद्विष्णुमनामयम् ११
एवं चास्य गुणाः सन्ति विरजाख्यस्य निर्मलाः
वक्तुं शक्नोति को देही विना शेषेण सत्तमाः २०
सहस्त्रयोजनान्ते च यो जपेद्विरजां शुभः
तस्येप्सितमसौ देवी ददाति किल तत्परा २१
विरजाख्यं द्विजश्रेष्ठा एवं निगदितं मया
तत्र यूयं तपस्तप्त्वा परां सिद्धिं गमिष्यथ २२

इति श्रीकपिलपुराणे गिरिजामाहात्म्यं नाम अष्टमोऽध्यायः ८

## अथ नवमोऽध्यायः

ऋषय ऊचुः
पुरा त्वया निगदिताः कृष्णार्कपार्वतीहराः
अधुना श्रोतुकामाश्च वयं शम्भोर्वदस्व नः १
तत्कीर्तितं त्वया विप्र मुक्तिदं पुरुषोत्तमम्
मैत्रेयं विरजाख्यं च सर्वपापनिसूदनम् २
नीलाद्रिस्तु जलाकीर्णो विरजाख्यस्ततोऽधिकः
मैत्रेयं बालुकाकीर्णं दुःसहं रवितेजसा ३
तस्मात्पवित्रं परमं किञ्चिन्नास्ति तपोधनाः
अस्माकं तपसे क्षेत्रं तस्मिन्नद्रौ वद प्रभो ४
तत्र विश्वेश्वरश्चास्ते इति प्रोक्तं त्वया पुरा
तस्य स्थानं वदास्माकं तदेव तपसः फलम् ५
भरद्वाज उवाच
वक्ष्यामि परमं पुण्यं स्थानं शम्भोर्द्विजोत्तमाः
सर्वपापहरं रम्यं कैलाशं पर्वतोत्तमम् ६
विरजैकाम्रयोर्मध्ये कैलाशं च श्रुतं द्विजाः
सर्वपापहरो देवस्तत्र श्रीशिखरेश्वरः ७
वकुलैश्चम्पकैर्वृक्षैः सपुष्पैरुपशोभितम्
सपल्लवैश्चूतपूगैर्नारिकेलैः सवामरैः ८
खर्जूरैरर्जुनैश्चैव पनसैः सुमनोहरैः
कर्कन्धूकुलकैर्वृक्षर्दाडिमैः प्रियदर्शनैः ९
विल्वैर्लोध्रैः पलाशैश्च पुन्नागैस्तुङ्गकेशरैः
जम्बुदन्तशटैर्वृक्षैः कोविदारैः फलार्दितैः १०
तिन्तिडीवटवृक्षैश्च खदिरैश्चम्पकैस्तथा
पारिभद्रैश्च वकुलैर्धात्रीभिर्नागकेशरैः ११
जातिकाजूथिकाभिश्च पुष्पैश्चैव सुवासितैः
तगरैर्मल्लिकाभिश्च करवीरैः सपाटलैः १२
अशोकैर्मालतीभिश्च माधवीभिः कदम्बकैः

सेवन्तिकाभिः कुन्दैश्च काञ्चनैः श्वेतरक्तकैः १३
एवं नानाविधैर्वृक्षैः पुष्पैर्नानाविधैर्नरैः
विश्वनाथस्य तत्स्थानं पूरितं वै समन्ततः १४
शिखरेशं समासाद्य सम्वत्सरमतन्द्रितः
मन्त्रेणाश्रयते यस्तु तस्य मन्त्रः प्रसिध्यति १५
तत्रासौ विश्वनाथस्तु विश्वस्योत्पादने रतः
मोक्षदः कामदः श्रीमान् लिङ्गरूपी न संशयः १६
पुण्यक्षेत्राणि सन्त्यज्य पुण्यस्थानान्यनेकशः
कैलाशे पार्वतीनाथः एकाकी च परन्तपः १७
यदोद्धृतश्च कैलाशो रावणेन दुरात्मना
तदेकशृङ्गं पतितं तत्कैलाशमिहोच्यते १८
कैलाशादधिकं मन्ये कर्मभूमौ यतः स्थितम्
तत्र कर्मफलं भोगस्तत्र भोगाश्च केवलम् १९
कैलाशे शङ्करस्थाने ये वसन्ति नरोत्तमाः
इह भोगफलावाप्तिर्मुक्तिस्तेषां करे स्थिता २०
कैलाशनिलयं शम्भोर्दुर्लभं मुक्तिदायकम्
यत्र देवगणाः सन्ति नित्यं शम्भोः समीपतः २१
आलोक्य शिखरेशं च पूजयित्वा प्रणम्य च
सुरभीमारणं दोषं क्षिप्त्वाऽर्ध्यं च व्रजेन्नरः २२
गुरुपत्नीकृतं दोषं गुरुनिन्दां कृतां तथा
व्रजेत्क्षिप्रं क्षयहेतुं स्मरन्वै शिखरेश्वरम् २३
ब्रह्मादिदेवताः सर्वाः काङ्क्षन्ति च मुहुर्मुहुः
भूमिलोकं कदा गत्वा द्रक्ष्यामः शिखरेश्वरम् २४
काङ्क्षन्ति पितरश्चैव प्रजाश्च सुनृपं यथा
यदास्माकं कुले जातः कैलाशाद्रिं गमिष्यति २५
तत्र गत्वा प्रयत्नेन स्नाति तीर्थे पयोऽमृते
अस्माकं तर्पयित्वा च नरकादुद्धरिष्यति २६
तस्मिन्नद्रौ द्विजश्रेष्ठास्तीर्थमस्ति पयोऽमृतम्

अग्रे श्रीशिखरेशस्य ईशानदिशमास्थितम् २७
वरेण्यं परमं पुण्यं पितृणां मुक्तिदायकम्
यत्र स्नात्वा च सौदासो राजा मुक्तिमवाप ह २८
ऋषय ऊचुः
तत्तीर्थस्य च माहात्म्यं विस्तरेण ददस्व नः
अन्यतीर्थस्य माहात्म्यं तस्मिन्नद्रौ द्विजोतमाः २९
भारद्वाज उवाच
भोगवत्यां च भूर्लोके स्वर्लोके सचराचरे
पयोऽमृतसमं तीर्थं नास्ति नास्ति वदाम्यहम् ३०
पुरा सत्ये च सौदासो रविवंशे महीपतिः
बभूव नरशार्दूलः प्रजापालनतत्परः ३१
वक्ता श्रोता महाशान्तो वृहस्पतिरिवापरः
रूपेण रतिनाथस्तु संग्रामे शचिनायकः ३२
तस्य बुद्धिः समुत्पन्ना मन्त्रं साधयितुं पुरा
वशिष्टं परिपप्रच्छ नृपतिः स्वपुरः स्थितम् ३३
सौदास उवाच
मन्त्रसिद्धिर्भवेत्कुत्र तत्स्थानं वद सत्तम
यत्र स्नात्वा च जप्त्वा च गमिष्यामि परं पदम् ३४
आस्ते वाराणसी क्षेत्रं मुक्तिदं सिद्धिकामदम्
यत्र विश्वेश्वरो देवः साधकानां वरप्रदः ३५
वाराणसीसमं भूप क्षेत्रं नास्ति महीतले
लिङ्गरूपधरः साक्षाद् यत्र देवो जगत्पतिः ३६
तस्मिन् क्षेत्रे महीपाल तीर्थं श्रीमणिकर्णिका
स्नात्वा तत्र नरो नारी ब्रह्महत्यात्प्रमुच्यते ३७
यत्र भागीरथी पुण्या नराणां मुक्तिदायिनी
भूलोके चैव पाताले स्वर्गलोके प्रतिष्ठिता ३८
भागीरथ्याश्च माहात्म्यं विस्तरं गदितं पुरा
यदम्बु कणमात्रं च ब्रह्महत्यां क्षयं नयेत् ३९

वाराणसी विश्वनाथो जाह्नवी मणिकर्णिका
एकैका दुर्लभा राजन् किमु यत्र चतुष्टयम् ४०
भरद्वाज उवाच
इति तस्य वचः श्रुत्वा महर्षेश्च नराधिपः
तमृषिं प्रणिपत्याशु प्रतस्थे क्षेत्रमुत्तमम् ४१
गत्वा स्नात्वा च गङ्गयां दृष्ट्वा च पार्वतीपतिम्
क्षमासत्यसमायुक्तस्तपस्तेपे सुदारुणम् ४२
एवं च कतिचित् काले गते देवो महेश्वरः
स्वरूपं दर्शयित्वा तं स्वप्ने वाक्यमुवाच ह ४३
शङ्कर उवाच
आगतस्ते महाबाहो क्षेत्रं मुक्तिप्रदं मम
इदानीं गच्छ तपसे कैलाशनिलयं मम ४४
तत्राहं दर्शयिष्यामि सत्यं त्वां मामकीं तनुम्
मुक्तिं चैव प्रदास्यामि सत्यं सत्यं मयोदितम् ४५
मत्पार्श्वे चैव हातेन्द्रतीर्थं नाम पयोऽमृतम्
चतुर्वर्गप्रदश्चैव तत्राहं शिखरेश्वरः ४६
सर्वपापहरं लिङ्गं नाम्ना श्रीशिखरेश्वरम्
यो मां पश्यति तत्रस्थं तस्मैर्मुक्तिं ददाम्यहम् ४७
तत्र तत्तपसा तुष्टो युगे सत्ये महीपते
त्रेतायां द्वापरे चैव दर्शनात् सिद्धिदः स्वयम् ४८
कलौ च दर्शनेनैव सिद्धिदोऽहं नृणां किल
तस्मिन्नद्रौ तीर्थवरे यः स्नाति च पयोऽमृते ४९
स याति परमं स्थानं मद्देहे च प्रलीयते
पयोऽमृते महातीर्थे पयस्तेनामृतोपमम् ५०
अमृतत्वं प्रयच्छाशु कृते स्नाने तवाम्भसि
अनेन विधिना भूप तत्र स्नानं समाचर ५१
तत्र स्नात्वा च मां दृष्ट्वा परां सिद्धिं गमिष्यसि
तत्रैव तीर्थं प्रवरं मदग्रे पापनाशनम् ५२

जंभकुनुमिति ख्यातं किंचदग्रे यमस्थितम्
पतन्ति तत्र वारीणि सर्वाङ्गशुभदानि च
सर्वलोकपवित्राणि सर्वलोकशुभानि च ५३
पर्वतोद्भवशीतानि तत्र स्नात्वा सुखं लभेत्
जलेषु च शिरो दत्वा शुद्धो भूत्वा नरोत्तमः ५४
तत्र स्नानेन यत्पुण्यं शृणुष्व रविवंशज
कैलाशकुण्डे सुस्नातः पूजयित्वा महेश्वरम् ५५
नरः सिधिमवाप्नोति तत्प्रसादान्न संशयः
तत्तोये मम तीर्थे च पूजनीयः स्थितो ह्यहम् ५६
तत्र गत्वा मन्त्रजपाल्लभते मुक्तिरूपताम्
इत्युक्त्वा गतवान् देवो राजा निद्रोत्थितस्तदा ५७
एकाकी च गतः श्रीमान् कैलाशाचलमुत्तमम्
तत्र राजा तपस्तप्त्वा स्नात्वा तीर्थे पयोऽमृते ५८
कश्चित्कालं स्थितश्चासौ पश्चान् मुक्तिं जगाम ह
एकाकी देवदेवेशस्तत्र कैलाशपर्वते ५९
तत्र कोलाहलं कृत्वा नरके पच्यते ध्रवम्
एवं मया निगदितं तत्स्थानं पर्वतोत्तमम्
तत्र गत्वा तपस्तप्त्वा परां सिद्धिं गमिष्यथः ६०

इति श्रीकपिलपुराणे सौदासमुक्तिप्राप्तिर्नाम
नवमोऽध्यायः ९

अथ दशमोऽध्यायः

ऋषय ऊचुः
तत्र कोलाहलं कृत्वा नरो नरकमाविशेत्
वयं तत्र गमिष्यामो भरद्वाज कथं वद १
सम्यक् स्थानं त्वया प्रोक्तं कैलाशं पार्वतीपतेः
तपस्तप्तुं महत् स्थानं केवलं दोषवर्जितम् २
उत्कले क्षेत्रमपरं किञ्चिदस्ति तपोधन

तद्वदाशु द्विजश्रेष्ठ अस्माकं च हितेच्छया ३
त्वत्प्रसादाद्भविष्यामः कृतार्था मुनिसत्तम
गुह्यं किमपरं ह्यस्ति क्षिप्रं वद महामते ४
भरद्वाज उवाच
एकाग्रमनसो भूत्वा शृणुध्वं मुनिसत्तमाः
आख्यातं कस्यचित्पूर्वं गोपनीयं प्रयत्नतः ५
गुह्याद्गुह्यतमं ज्ञेयं परात्परतरं स्मृतम्
एकाग्रकरणं नाम तस्मिन्नद्रौ तपोधनाः ६
प्राणिनां मुक्तिदं शस्तं देवानां जयवर्द्धनम्
निर्मलं च निराकारं क्षेत्रं हरिहरात्मकम् ७
नरसिद्धगणाकीर्णं मुनीन्द्रैरुपशोभितम्
गन्धर्वैः किन्नरैर्जुष्टं विद्याधरसचारणैः ८
आम्रनिम्बकदम्बैश्च सपुष्पैश्च फलान्वितैः
पूगैः पनसकैर्वृक्षैर्न्यग्रोधैर्वकुलैस्तथा ९
पलाशैर्मुचुकुन्दैश्च पारिजातैः प्रियाङ्गुभिः
कर्कन्धुनगनारङ्गैर्वृक्षैर्राजादनैरपि १०
खदिरैश्चैव विल्वैश्च वञ्जुभिः करहाटकैः
कर्णिकारैर्जपापुष्पैः कपित्थैः चिपुमन्दकैः ११
चम्पकैरतिमुक्तैश्च सुपुष्पैर्नागकेशरैः
शालतालशिरीषैश्च जम्बीरैः प्रियदर्शनैः १२
कदलीवनषण्डैश्च पूरितं सुमनोहरैः
कर्वीरैः कणिकारैश्च कपित्थैर्बहुलैर्वरैः १३
यूथिकामल्लिकाभिश्च जातीलकुचकैस्तथा
अशोकैर्वकुलैश्चैव द्विरेफगणशोभितैः १४
मालतीलतिकाभिश्च दाडिमैर्वीजपूरकैः
एवं नानाविधैर्वृक्षैः तद्वनं पूरितं द्विजाः १५
दशादनैः खञ्जविटैः कोकिलैः कलनिःस्वनैः
चटकैश्चातकैश्चैव चकोरैश्चित्रपक्षिभिः १६

व्याघ्राटैः कुक्कुटैश्चैव शिरोमुकुटभूषितैः
पारावतैः सूक्ष्मपक्षैः लोहपृष्ठैर्वरानने १७
कादम्बै राजहंसैश्च प्रियायुक्तैः शुकैस्तथा
वर्तिकैस्तित्तिरीभिश्च मयूरैर्घननृत्यकैः १८
सिंहैर्व्याघ्रैश्च खड्गैश्च भूदारैक्लञ्चगैर्मृगैः
एवं नाना विधैरन्यैश्चतुष्पादैर्विहङ्गमैः १९
पूरितं तद्वनं पुण्यं स्वजातिपरिनिष्ठितैः
दीर्घिकाभिस्तडागैश्च पद्मोत्पलविराजितैः २०
कारण्डवैः प्लवैर्हंसैस्तवकैर्जलकुक्कुटैः
अकर्दमैः स्वच्छतोयैः सोपानेन विराजितैः २१
एवं नानाविधगुणैः समन्तात् परिपूरितम्
एकाग्रं परमं पुण्यं वनं विष्णुप्रियं महत् २२
सुवासितैर्गन्धवत्या उर्मिभिर्गुरुचञ्चलैः
वामविक्षेपितैः पुण्यैः शीतलं सुमनोहरम् २३
साक्षाद्वैकुण्ठभुवनं जानीध्वं मुनिसत्तमाः
एकाग्रे तु जगन्नाथो भाति पाषाणनीलया २४
शङ्खचक्रधरः श्रीमान् वनमालाविभूषितः
यत्र विश्वेश्वरः शम्भुः साक्षान्नारायणात्मकः २५
यस्माद्यूयं मुक्तिकामास्तस्माद्वै तत्र गच्छत २६

इति श्रीकपिलपुराणे एकाम्रवर्णनं नाम
दशमोऽध्यायः १०

## अथैकादशोऽध्यायः

ऋषय ऊचुः
विस्तरेण समाख्याहि क्षेत्रमेकाम्रकं मुने
आश्रमाणि च रम्याणि तत्र लिङ्गानि कोटिशः १
श्रोतुकामा वयं सर्वे गमिष्यामो न संशयः
पूजयामो विरूपाक्षं नीरदाभं जनार्दनम् २

भरद्वाज उवाच
क्षेत्रमेकाम्रकं श्रीमत् परमानन्ददायकम्
समन्तात्क्रोशमात्रं च कोटिलिङ्गावृता मही ३
तत्रासौ देवदेवस्तु स्वगणैः पार्वतीपतिः
वरदो मुक्तिदो नृणां साधकानां च सिद्धिदः ४
परमानन्दरूपेण संस्थितः परमेश्वरः
परात्परतरो ज्ञेयो ब्रह्मादीनां वरप्रदः ५
वाराणसीं परित्यज्य जलाकीर्णो महेश्वरः
प्रार्थयित्वा हरेः पुण्यमेकाम्रे वनमाविशेत् ६
ऋषय ऊचुः
प्रार्थितं च कदाऽनेन शम्भुना लिङ्गरूपिणा
सर्वमेतत्तु वृतान्तं विस्तरेण वद प्रभो ७
भरद्वाज उवाच
पुरा त्रेतायुगे विप्रा वाराणस्यां महेश्वरः
तिष्ठन् वाक्यमुवाचेदं नारदं मुनिपुङ्गवम् ८
शिव उवाच
अस्यां पूर्यामधिष्ठाय नरस्याघो विनश्यति
जातेयं च जनाकीर्णा तपोविघ्नकरी मुने ९
यत्स्थानं च जनाकीर्णं तत्र स्थातुं न युज्यते
उपद्रवो भवेत्तत्र नास्तिकैर्ज्ञानदुर्वलैः १०
नास्तिका यत्र तिष्ठन्ति तत्र धर्मो न विद्यते
अधर्माच्च भवेल्लुप्तो हरेर्भागो मुनीश्वराः ११
एतत्स्थानं प्रयत्नेन पार्वत्यर्थं पुरा कृतम्
पार्वत्या रुचिरं यत्र तत्स्थानं मम हर्षदम् १२
अधुनात्र मुनिश्रेष्ठ स्थातुं नोत्सहते मनः
रहस्यं परमं स्थानं कुत्रास्ति मां वदाशु च १३
नारद उवाच
लवणस्योदधेस्तीरे लीलशैलो नगोत्तमः

तदुत्तरस्यां विख्यातं क्षेत्रमेकाम्रकं प्रभो १४
तत्र श्रीवासुदेवस्तु रमानाथो जगद्गुरुः
अनन्तेन सह श्रीमान् एकाकी विजने वने १५
तत्स्थानं परमं गुह्यं न जानाति प्रजापतिः
भगवानपि जानाति देवतानां च का कथा १६
एकाम्रं परमं गुह्यं जगन्नाथस्य चक्रिणः
क्रोडस्थिताऽब्धिकन्यापि नैव जानाति शङ्करः १७
साक्षाद्विग्रहवान्तत्र अनन्तेन जनार्दनः
सृष्ट्युत्पत्तिनाशौ च स्थितिस्तेन विचार्यते १८
सर्वदा सोप्यनन्तस्तु देवेन सह तिष्ठति
लक्ष्मणो रामचन्द्रश्च कृष्णो वै रोहिणीसुतः १९
दिवसानेकपर्य्यन्तं तपस्तत्वा महेश्वरः
प्रसन्नो वासुदेवश्च ज्ञातं तैः क्षेत्रमुत्तमम् २०
अहं शेषो जगन्नाथस्त्रयाणां तत्र सङ्गतिः
इन्द्रादीनां च देवनामन्येषां च न विद्यते २१
एवं परमपुण्यं तन् मया ज्ञातं पुरा प्रभो
इदानीं भवता ज्ञातं क्षेत्रं परमपावनम् २२
भरद्वाज उवाच
एवं निगदिते तस्मिन्नारदे चण्डिकापतिः
मुनिपाणौ करं दत्त्वा गन्तुं चक्रे मनस्तदा २३
गणाध्यक्षमुवाचेदं वचनं नन्दिकेश्वरम्
एकाम्रकं गमिष्यामि सज्जी भक्तु पुत्रक २४
गृहीत्वा तरसा गच्छ वृषेन्द्रं गिरिजां शुभाम्
नाथाज्ञां शिरसा धृत्वा शूलपाणिर्ययौ तदा २५
समानीय च वृषभं पार्वती निर्जगाम ह
कोटिलिङ्गाद्यथासंख्यं कथयामास सत्वरम् २६
सज्जीभवध्वं यूयं च गतैकाम्रं जगद्गुरुः
इत्युक्त्वा गतवांस्तत्र गृहीत्वा गिरिजां वृषम् २७

स्वयं वेशधरो भूत्वा देवदेवः समारुहत्
कोटिचन्द्रप्रतीकाशं नानाभूषणभूषितम्  २८
दृष्ट्वा स्ववाहनं शम्भुर्नन्दिनं प्रसशंस ह
ततोऽसौ नन्दिकेशस्तु देवदेवस्य कर्णयोः  २९
कुण्डलं सञ्जयामास नानारत्नविराजितम्
कोटिसूर्य्यप्रतीकाशं हेमवैदूर्य्यनिर्मलम्  ३०
मूर्ध्नि देशे सुमुकुटमर्द्धचन्द्रविभूषितम्
कर्पूरमिश्रितं शुद्धं चन्दनं च सुवासितम्  ३१
शीतलं पार्वतीशस्य भालपट्टे च लेपितम्
ततो गण्डस्थले चैव कुङ्कुमं मृगपत्रिकाम्  ३२
ताम्बूलमधरे शुद्धं ददौ नन्दी ससत्वरः
हृदये चोज्ज्वलं हारं माणिक्यं मौक्तिकं तथा  ३३
गलेन रञ्जयामास चन्दनं पुष्पमालिकाम्
पद्मरागयुतौ हेमौ कङ्कणौ सुप्रकाशितौ  ३४
ददौ श्रीकरयोस्तप्तौ विद्युदाभाश्च चन्द्रिकाः
तत्र पट्टाम्बरं कटद्यां नीवीवस्त्रं ततोपरि  ३५
मेखलां स्वञ्जयामास क्षुद्रघण्टां सुशोभिताम्
पादयोर्नूपुरं दिव्यं नीलेन्द्रमणिसंयुतम्  ३६
सुवेशमेवं देवस्य नन्दिकेशश्चकार ह
सुवेशः सुमुखः श्रीमान् कोटिचन्द्रद्युतिर्हरः  ३७
लसति सवृषो देवो क्रोडे कृत्वा हिमाद्रिजाम्
इत्थं भूत्वा जगामाशु गीयमानः पुरःसरैः  ३८
चामरैर्व्यजनैः शुभ्रैः सिद्धगन्धर्वकिन्नरैः
श्वेतातपत्रं शिरसि कोटद्यर्कद्युतिनिन्दकम्  ३९
दीर्घनादं सुविस्तीर्णं रम्यं भृकुटिनर्तनम्
जयशब्दं तथा नृत्यं कुर्वन्त्यप्सरसां गणाः  ४०
त्रिशूलं डमरूं चैव व्याघ्राम्बरसमन्वितः
एवं श्रीपार्वतीनाथो भक्तानां वरदायकः  ४१

एकाम्रं प्रापयामास नारदेन महात्मना
गत्वैकाम्रे दमेनासौ वासुदेवं सनातनम्
साष्टाङ्गेन प्रणम्याशु स्तुतिमेतां चकार ह ४२
श्रीशङ्कर उवाच
नमस्ते परमानन्द नमो नीलाभलोचन
नमस्ते हरये तुभ्यं त्रयीमूर्तिधराय च ४३
नीलजीभूतवपुषे नमस्ते लोकनायक
देवानां वरदाताऽसि प्रसन्नातिहर प्रभो ४४
एकाम्रकनिवासाय नमस्ते पीतवाससे
त्रिगुणैर्वाह्यरूपाय शङ्खचक्रावधारिणे ४५
त्वमेक जगतामादिः कारणानां च कारणम्
भक्तबन्धो जगन्नाथ करुणामयसागर ४६
तव स्थानानि रम्याणि सन्ति देव सहस्रशः
एकाम्रे गुप्तरूपं च न जानामि कथं प्रभो ४७
मामुवाच पुरा विष्णो त्वं ममार्द्धशरीरकः
इदानीं तु कथं राज्यं कृतवानसि केशव ४८
नारदस्तव भक्तस्तु शय्या ते भुजगेश्वरः
केवलं तौ हि जानीतः कृपा नास्ति मयि प्रभो ४९
गोपीनां प्रेमभक्तानां दत्ता भक्तिस्त्वया प्रभो
सनकाद्याश्च तिष्ठन्ति ईश्वरेच्छा निरङ्कुशाः ५०
एकाम्रविपिने रम्ये तिष्ठन्ति परमेश्वर
योगनिद्रां समाश्रित्य लोचनार्द्धौ च मुद्रितौ ५१
इदानीं करुणां कृत्वा देहि मे जगदीश्वर
स्वस्थानं देहि मे स्थातुमागतोऽहं तवान्तिके ५२
स्तुतिरित्थं प्रकुर्वाणे हिमाद्रितनयापतौ
उन्मील्य लोचने विष्णुर्विहसन् वाक्यमब्रवीत् ५३
श्रीवासुदेव उवाच
शृणु मद्वचनं शम्भो कथयामि हितं तव

स्थातुं स्थानं प्रदास्यामि कुरु सत्यं ममाग्रतः ५४
नैव काशीनिवासाय स्थास्याम्यत्र च सर्वदा
स्वगणैरावृतो नित्यमिति सत्यं महेश्वर ५५
श्रीशङ्कर उवाच
काशीं कथं न यास्यामि तत्रास्ते जाह्नवी मम
सर्वतीर्थमयी पुण्या तीर्थं मे मणिकर्णिका ५६
वासुदेव उवाच
नारदस्तु न जानाति नैव शेषो गिरीश्वर
अहमेव विजानामि विद्धि त्वमधुना हर ५७
अत्रैव जाह्नवीत्यस्ति मत्पादाग्रच्युता शुभा
आग्नेय्यां दिशि पृष्ठे मे गङ्गा च मुनिसंज्ञका ५८
अन्यत्रान्यत्र तीर्थानि सुगुप्तानि च सन्ति मे
पश्चात्सर्वाणि वक्ष्यामि कुरु सत्यं च शङ्कर ५९
शङ्कर उवाच
सत्यं सत्यं वदाम्यत्र तिष्ठामि मधुसूदन
वाराणसीं परित्यज्य अन्यक्षेत्राणि माधव ६०
एकाम्रविपिने स्थास्ये तव सन्निहिते प्रभो
सत्यं सत्यं पुनः सत्यं न यास्यामि च कुत्रचित् ६१
इत्युक्त्वा भगवान् शम्भुस्तद्विष्णोर्दक्षिणे दिशि
दिग्रूपधरश्चास्ते चतुर्वर्गफलप्रदः ६२
मूले स्फटिकसङ्काशं महानीलं च मध्यमम्
माणिक्यादिसममग्रयं लिङ्गं त्रिभुवनेश्वरम् ६३
भारद्वाज उवाच
ततः प्रभृति भो विप्राः क्षेत्रे राजा महेश्वरः
कोटिलिङ्गावृतः श्रीमान् वासुदेवस्तु पालकः ६४
तस्य पश्यन्ति ये लिङ्गमेकाम्रे मुनिसत्तमाः
ब्रह्म हत्यायुता वापि मुक्तिस्तेषां करे स्थिता ६५
एवं शम्भुः प्रार्थयित्वा वासुदेवं सनातनम्

एकाम्रविपिने ह्यास्ते कोटिलिङ्गधरः प्रभुः  ६६
इति श्रीकपिलपुराणे एकाम्रे महेशागमनं नाम
एकादशोऽध्यायः  ११

अथ द्वादशोऽध्यायः

ऋषयः ऊचुः
तस्मिन् तीर्थे द्विजश्रेष्ठ वद तीर्थं फलप्रदम्
नामधेयं तथोत्पन्नं सुगुप्तं चक्रपाणिना  १
भरद्वाज उवाच
गते च कतिचित् काले तत्र देवो महेश्वरः
रममाणः स्थितस्तत्र दृश्यमेकमजायत  २
तस्मिन् क्षणे च भो विप्राः श्रवन्ति जलविन्दवः
तस्माद्विन्दुसरो नाम चक्रे देवगणैः सह  ३
पुष्करादीनि तीर्थानि क्षीरोदादींश्च सागरान्
गङ्गाद्याः सरितश्चैव सर्वान् देवान् समर्चयेत्  ४
सर्वे तत्र स्रवन्तिस्म जलविन्दूनहर्निशम्
तस्माद्वेदे पुराणे च नाम्ना विन्दुसरोवरः  ५
गङ्गा गोदावरी रेवा तुङ्गभद्रा च नर्मदा
कालिन्दी सरयूश्चैव तापी तत्र स्रवन्ति च  ६
मानसं पुष्करं पम्पा सुतीक्ष्णं शैलनिर्मलम्
स्रवन्त्येतानि सर्वाणि तीर्थे विन्दूद्भवे द्विजाः  ७
क्षीरोधिर्लवणोधिश्च पयोधिर्दुग्ध एव च
सन्ति विन्दूद्भवे तीर्थे दधिसर्पिःसुरार्णवाः  ८
द्वारावत्यां च तत्तीर्थं नैमिषे दण्डके वने
तानि विन्दूद्भवे नित्यं तथा वदरिकाश्रमे  ९
एकाम्रकवने विप्रास्तीर्थं बिन्दुसरः श्रुतम्
तत्र स्नात्वा च पीत्वा च न नरो नरकं व्रजेत्  १०
तीर्थं विन्दूद्भवं विप्रा मुनीन्द्रैरुपसेवितम्

पवित्रं निर्मलजलं सोपानैरुपशोभितम् ११
स्वर्गे मर्त्ये च पाताले ह्यन्तरिक्षे तथा दिशि
न भूतं न भविष्यं च तीर्थं विन्दूद्भवात्परम् १२
विन्दूद्भवं जलं विप्रा अमृतं नात्र संशयः
विन्दूद्भवे नरः स्नात्वा यः पश्येद्वृषभध्वजम् १३
सर्वपापविनिर्मुक्तः शिवदेहे प्रलीयते
अत्र चैव द्विजश्रेष्ठा देवी पादहरा श्रुता १४
तां दृष्ट्वा पूजयित्वा च नरस्तु सुखमेधते
पादे देव्या हरो यस्मात् तस्मात्पादहरा स्मृता १५
तत्र स्नात्वा च तां दृष्ट्वा पश्चात्पश्येन्महेश्वरम्
याऽसौ पादहरा देवी नराणां सुखदायिनी १६
द्वितीये विग्रहे श्रेयः दात्री सर्वस्य विद्यते
स्नात्वा विन्दूद्भवे तीर्थे दृष्ट्वा पादहरां शुभाम् १७
तस्मात्तीर्थेश्वरं पूज्य नरो मुच्येत पातकात्
विन्दुतीर्थे नरः स्नात्वा दृष्ट्वा श्रीपुरुषोत्तमम् १८
देवीं पादहरां दृष्ट्वा ह्यक्षयं च फलं लभेत्
यस्तु पश्यति तल्लिङ्गं नाम्ना त्रिभुवनेश्वरम् १९
देवदेवो जगत्स्वामी तस्मै मुक्तिं प्रयच्छति
तस्मिन्तीर्थवरे स्नात्वा दृष्ट्वा श्रीधरशङ्करम् २०
कामगेन विमानेन वैष्णवं पदमाप्नुयात्
श्रेष्ठं च सर्वतीर्थानां विन्दूद्भवमुदाहृतम् २१
एतन्निगदितं विप्राः तीर्थं विन्दूद्भवं शुभम्
अपरं कथयिष्यामि किं विप्रा वदत शुभम् २२
पुण्याख्यानमिदं येन पठ्यते श्रूयतेऽथवा
सर्वपापक्षयं कृत्वा सोऽमृतत्वमवाप्नुयात् २३

इति श्रीकपिलपुराणे विन्दूद्भवो नाम
द्वादशोऽध्यायः १२

## अथ त्रयोदशोऽध्यायः

ऋषय ऊचुः
विस्तरेण समाख्याहि क्षेत्रमाहात्म्यमुत्तमम्
वासुदेवस्य माहात्म्यं कोटिलिङ्गेश्वरस्य तु १
भरद्वाज उवाच
एकाम्रकं वनं श्रीमत्क्षेत्राणामुत्तमं वरम्
एकाम्रसदृशं क्षेत्रं भूमौ नास्ति द्विजोत्तमाः २
तदेव परमं स्थानं तदेव परमं पदम्
निर्भया निवसन्त्यत्र सर्वे देवाः सवासवाः ३
सर्वतीर्थमयं ह्येतदेकाम्रवनसंज्ञितम्
तीर्थे साक्षात्परं ब्रह्म लिङ्गरूपी वसत्यसौ ४
एकाम्रकं महापुण्यं सर्वक्षेत्राधिकं फलम्
कामदं मोक्षदं चैव सर्वपुण्यविवर्धनम् ५
ये नरास्तत्र गच्छन्ति कृतसंकल्पमानसाः
पापं निर्दहन्त्याशु उद्धरेयुः कुलानि वै ६
एकाम्रसदृशं क्षेत्रं नैव पश्यामि किंचन
पापिनो यत्र गत्वा च लभेयुर्मोक्षमुत्तमम् ७
शरीरं विपिने तस्मिन् ये त्यजन्ति नरोत्तमाः
ते यान्ति शिवसान्निध्यं भासमानाः प्रियम्वदाः ८
हत्याकोटियुतो वापि गोघ्नो वा गुरुतल्पगः
एकाम्रविग्रहं दृष्ट्वा यान्ति विष्णुसनातनम् ९
हरिशङ्करयोर्मध्ये जले विन्दूद्भवे द्विजाः
कोटकोऽपि त्यजन्देहं नूनं याति परं पदम् १०
अग्रे श्रीवासुदेवस्व शरीरं त्यजति तु यः
जलमध्ये द्विजश्रेष्ठा वासुदेवे च लीयते ११
तत्र त्यक्त्वा शरीरं स्वं कीटाद्या जङ्गमास्तथा
सर्वे मुक्तिपथं यान्ति मनुष्याणां च किं पुनः १२
एकाम्रके यदा जन्तुस्त्यजति स्वशरीरकम्

दाता श्रीभगवान् शंभुः कर्णमूले पठेदिदम्  १३
त्वमत्र त्यजसि देहं पुरा पुण्यं कृतं त्वया
बदोङ्कारं व्रज परं वैष्णवं च सनातनम्  १४
इति मन्त्रं समुचार्य्य कर्णमूले महेश्वरः
स्वगणान्प्रेषयित्वा च निराकरं नयेद्ध्रुवम्  १५
दक्षिणे गजराजस्य वृक्षश्चामलको द्विजाः
सर्वपापहरश्चासौ स्वयं देवेन निर्मितः  १६
करोति नूनं नित्यं हि वासुदेवप्रियं शुभम्
विशेषोऽयं तरुर्विप्राः क्षेत्रराजस्थितो यतः  १७
तन्मूले ये त्यजन्तिस्म शरीरं पापकृत्तमाः
ते मुक्तिं च गता विप्राः किं पुनः पुण्यकर्मणाम्  १८
अविश्वासकृतानां च एतां न परमेश्वरः
इममालकं वृक्षं विश्वासार्थं चकार ह  १९
तत्रैकाम्रगृहे वाह्ये अन्तरिक्षे जले स्थले
यत्र तत्र शरीरं च त्यक्त्वा मुक्तिमवाप्नुयात्  २०
दुर्वृत्तः साधुर्वृत्तो वा यस्य वासो द्विजोत्तमाः
त्यक्त्वैकाम्रं त्वदेहं च नरो वैकुण्ठमालभेत्  २१
एवं नानाविधगुणाः तस्यैकाम्रवनस्य च
यत्र साक्षाज्जगत्स्वामी दर्शनान्मुक्तिदो मतः  २२
विघ्नेश्वरं वृषं देवं देवीं च श्रीगुहं तरुम्
सावित्रीं यः समालोक्य न मातुस्स्तनदो भवेत्  २३
कोटिलिङ्गेश्वरं तत्र येऽर्चयन्ति समाहिताः
तेषां भाग्यवतां जन्म सफलं परिकीर्तितम्  २४
गन्धैः पुष्पैस्तथा धूपैर्दीपैर्नैवेद्यकैरपि
मालाभिस्ताम्बुलैश्चैव एकाम्रविपिने शिवम्  २५
पूजयन्ति नरश्रेष्ठा ये संतप्तमानसाः
तेषां गतिं द्विजश्रेष्ठाः शृणुध्वं कथयामि वः  २६
नानाविधैर्विमानैश्च सिद्धगन्धर्वसेवितैः

पताकाभिर्ध्वजैः शुभैः अप्सरोगणनृत्यकैः २७
इन्द्रनीलप्रतीकाशैः पद्मरागनिभैस्तथा
निर्मितैः स्वर्णमुक्ताभ्यां शिवि शङ्करवेष्टितैः २८
व्रजन्ति शिवसान्निध्यं ते नराः दृष्टमानसाः
यथेप्सितानि भोगानि तत्र भुञ्जन्ति मानवाः २९
असौ देवो रूपाद्यो ब्रह्मरूपी न संशयः
अस्य दर्शनमात्रेण ब्रह्महत्या विनश्यति ३०
एकाम्रविपिने नूनं लिङ्गरूपिनमव्ययम्
भक्त्या पश्यन्ति ये नित्यं तेषां मुक्तिः करे स्थिता ३१
नैवेद्यं यस्य देवस्य महापातकनाशनम्
ब्रह्मादीनां च देवानां भोग्यं ब्राह्मणसत्तमाः ३२
एकाम्रविपिने विप्राः लिङ्गं साक्षात्सनातनम्
नैवेद्यं यस्य वाञ्छन्ति शक्राद्यास्त्रिदिवौकसः ३३
अग्राह्यमीशनैवेद्यं न भोक्तव्यमिति द्विजाः
यानि वाक्यानि तान्यत्र नाद्रियन्ते कदाचन ३४
महाप्रसादं नैवेद्यमिति प्राहुर्महर्षयः
एकाम्रकानने विष्णोर्देहे ब्राह्मणसत्तमाः ३५
नैवेद्ये लिङ्गराजस्य पुण्ये संख्यां च मा कृथाः
तदनादृत्य नरकं यान्ति नास्त्यत्र संशयः ३६
तस्य श्रीलिङ्गराजस्य ध्वजारोपणमुत्तमम्
यः करोति नरः श्रेष्ठः स शिवत्वं च गच्छति
पट्टवस्त्रैर्नीलवस्त्रैः पीतशुक्लाम्बरैस्तथा ३७
ये कुर्वन्ति नरास्तत्र ध्वजारोपणमीश्वरे
ब्रह्महत्यादिपापानि क्षयित्वा ते नरोत्तमाः ३८
पितृनुद्धृत्य नरकात्ते व्रजन्ति शिवं ध्रुवम्
पूजाकाले च यस्तत्र श्रावयन्ति मुरजध्वनिम् ३९
मृदङ्गशङ्खनादं च पटहं भेरिमेव च
काहलं रिणिभं शब्दं प्रत्नेन नरोत्तमाः ४०

तै शब्दैर्वेष्टितास्ते च व्रजन्ति शिवमव्ययम्
श्रुत्वैवं तस्य शब्दं च नरो मुक्तिं वजेद्विजाः ४१
तस्य पूजां समालोक्य न जाने किं फलं भवेत्
कोटिलिङ्गेश्वरस्याग्रे यस्तु भक्त्या जपेन् मनुम्
इह लोके सुखी भोगी देहान्ते शिवमाप्नुयात् ४२
कोटिलिङ्गेश्वरो यस्तु तद्ब्रह्मैव न संशयः
यमालोक्य नरा नित्यं प्राप्नुवन्ति मनोरथम् ४३
ब्रह्मादिदेवताः सर्वा यमर्चयन्त्यहर्निशम्
भक्त्या बिन्दूद्भवे तीर्थे स्वपदं प्राप्नुवन्ति च ४४
नास्ति नास्ति समं लिङ्गं कोटिलिङ्गेश्वरात्परम्
भोगवत्यां भूवि स्वर्गे सत्यं सत्यं वदामि वः ४५
एकाम्रविपिने विप्राः योऽसौ त्रिभुवनेश्वरः
तस्य दर्शनमात्रेण नरो मोक्षं च गच्छति ४६
प्रदक्षिणं प्रकुर्वन्ति कोटिलिङ्गेश्वरस्य ये
पदात्पदाद्ब्रह्मपदं तेषां सन्निहितं भवेत् ४७
चण्डेश्वरं समासाद्य सव्यासव्यप्रदक्षिणम्
लङ्घनं सोमसूत्रस्य कृत्वा नरकमश्नुते ४८
तस्याग्रे वृषराजस्य स्वयं विग्रहवान्द्विजाः
तं दृष्ट्वा पूजयित्वा च शिवप्रीतिं लभेन्नरः ४९
देवस्य पृष्ठभागे तु नैर्ॠतिं दिशमाश्रिताम्
सावित्रीं पूजयित्वा च दृष्ट्वा वाञ्छितमाप्नुयात् ५०
अग्रे विघ्नेश्वरं दृष्ट्वा पार्श्वे चण्डे हिमाद्रिजाम्
पूजयित्वा प्रयत्नेन नरकांश्च जिघांसति ५१
देवस्य उत्तरे भागे किञ्चिदुतरदिग्गतम्
शिखिध्वजं समालोक्य नरः सम्पदमालभेत् ५२
तस्य सन्निहिते पूर्वे एकाम्रेश्वरसंज्ञकम्
एकाम्रवृक्षस्तत्रासीत्पुरा कल्पे तु मुक्तिदः ५३
तत्र एको गतश्चाम्रस्तस्मादेकाम्रकं वनम्

महोच्छ्रायः सुशाखी च सुमनोहरपल्लवः ५४
धर्मार्थकाममोक्षाश्च पत्रवृक्षफलानि च
तं वृक्षं गोपनीयं च चकारासुरनाशनः ५५
तस्य मूलं शमेशस्तु तं नाम्नाऽऽख्यातिमागताः
तं दृष्ट्वा विधिमन्त्रेण धर्मकामार्थमाप्नुयात् ५६
तत्र श्रीशैलजाग्रे च तिक्तशाको महान्द्रुमः
पुरा श्रीभगवान्शम्भुः पादपं तमरोपयत् ५७
तस्य वृक्षस्य महात्म्यं शृणुध्वं पापनाशनम्
पुरा देवासुरे ज्येष्ठे भैरवेऽत्यन्तसंकटे ५८
इन्द्राद्या निर्जिताः सर्वे राक्षसैर्बलदर्पितैः
तदेन्द्रः शङ्कमानस्तु वाक्यमूचे बृहस्पतिम् ५९
बृहस्पतिरुवाच
गच्छैकाम्रं शचीनाथ पश्य देवं सनातनम्
तिक्तशाकतले तत्र तपस्तप्त्वा च जेष्यसि ६०
श्रुत्वेत्थं वचनं तस्य दुष्टनाशपरस्तथा
किं तेजः परमं मन्त्रं बहुकालं जजाप ह ६१
ततः श्रीभगवान्भर्गस्तपसा परितोषितः
रम्यं सुश्लिष्टवचनमुचितं वलसूदनम् ६२
शङ्कर उवाच
पादपोऽयमहं साक्षात् शृणुध्वं पाकशासन
तस्य मूले जपन् मन्त्रं ददामि वरमीप्सितम् ६३
अधुना हूयतां दैत्यान्तस्मिन्नेकाम्रकानने
जेतासि कुरु सङ्ग्रामं तस्मिन्नेकाम्रकानने ६४
ततः त्रिदशनाथेन स्वीकृतं क्रतुनाशनम्
सङ्गतः त्रिदिवं सर्वदेवताभिः समन्वितः ६५
सह दैत्यैस्ततो युद्धं चकार वलसूदनः
आज्ञया देवदेवस्य जघान वरदानवान् ६६
ततोऽम्बरात् पुष्पवृष्टिः पुरुहूतस्य मस्तके

पपात देवताः सर्वा ययुः स्वं स्वं पुरं ततः ६७
एवं श्रीतिक्तशाकस्तु वृक्षः परमसिद्धिदः
स्वमन्त्रेण च तं दृष्ट्वा मनोरथमवाप्नुयात् ६८
एवं मया वो गदितं समासतो
वृक्षस्य माहात्म्यमतीव निर्मलम्
मूलेऽस्य कृत्वा परमं तपः पुरा
जघान दैत्यान् त्रिदशाधिपो द्विजाः ६९

इति श्रीकपिलपुराणे शक्रयोगवर्द्धनं नाम
त्रयोदशोऽध्यायः १३

## अथ चतुर्दशोऽध्यायः

भरद्वाज उवाच
अथ वक्ष्यामि माहात्म्यं वासुदेवस्य भो द्विजाः
वासुदेवस्य संकीर्त्या नरोमुक्तिमवाप्नुयात् १
तत्र एकाम्रके पुण्ये वासुदेवो जगद्गुरुः
वैकुण्ठं च परित्यज्य आस्ते विग्रहवान् स्वयम् २
नानारत्नैः सुघटितैः कङ्कणैर्भुजशोभितः
किङ्किणीभूषितकटिर्नैवपल्लवपादकः ३
जम्बुनीमकदम्बादिनिद्राघूर्णितलोचनः
कुण्डलाभ्यां विचित्राभ्यां गण्डस्थलविराजितः ४
भ्राजमानो जटाभिश्च भृकुटैर्नाकतेजसा
इन्द्रनीलमणिश्यामः श्रीवत्साङ्कितविग्रहः ५
दाडिमीपुष्पसंकाशस्त्वधरोऽमृतदायकः
रामकृष्णस्वरूपेण स्थितोऽसौ कमलाधरः ६
साक्षाद्ब्रह्म स्वरूपोऽयं परं ब्रह्म उदाहृतः
अद्वितीयोऽक्षयो नित्यो वासुदेवेतिसंज्ञकः ७
स एव गतिदाता च स एव परमात्मकः
कीटवृक्षपतङ्गेषु स आस्ते हृदयस्थितः ८

यो वा दन्ति ततं पुटं वासुदेवं निरञ्जनम्
भक्त्या तं नैव पश्यन्ति पच्यन्ते रौरवे चिरम्  ९
सर्वक्षेत्राणि रम्याणि तीर्थान्यायतनानि च
परित्यज्य जगन्नाथ एकाम्र वनमास्थितम्  १०
एकाम्र प्रलये विप्रा न नाशमधिगच्छति
तस्मात्सर्वाणि संत्यज्य आस्ते तत्र गदाधरः  ११
एकाम्रकं विन्दुसरोवरं ते
परात्परं ब्रह्मसदात्मकोऽस्ति ।
अनीश्वरः शाश्वत ईश्वरस्तु
श्यामोपसन्धो हरिरर्कतेजः  १२
ब्रह्मस्वरूपो यमतत्त्व वस्तु
भक्तप्रियः शान्तमलः सुदेहः
ज्ञात्वा मनोमानपरीक्षकाणां
सरः फलं यद्यतते यथोक्तम्  १३
असौ मुरारिः जनतापहारी
रक्षार्थमेकस्तु विराजमानः
कौमोदकी शङ्खरथाङ्गधारी
पीताम्बरः कौस्तुभमादधानः  १४
ब्रह्मस्वरूपो यमकल्मषस्तु
भक्तप्रियः शान्तमलः सुदेहः
ज्ञात्वा मनोमानस राक्षसानां
सरः फलं यच्छति यद्यथोक्तम्  १५
श्रीवासुदेवस्य च दर्शनेन
दक्षस्य शेषस्य गदायुधस्य
शठाः खला नास्तिककर्मयुक्ता
एकाम्रके मुक्तिमवाप्नुयुस्ते  १६
योऽसौ सर्वगतो देवो मुरारिः मधुसूदनः
स आस्ते भगवान् साक्षादेकाम्रवनमध्यगः  १७

पृथिव्यां यानि तीर्थानि ऋषीणामाश्रमाणि च
हरिस्तानि परित्यज्य शिलारूपधरः स्वयम्  १८
नीलाद्रौ च दारुवपुः कदाचित्संत्यजेद् हरिः
एकाम्र न त्यजेद्भाति सदा पाषाणनीलया  १९
एकाम्रवनमध्यास्ते शङ्खचक्रधरो हरिः
यस्य स्मरणमात्रेण पातकानि ययुः क्षयम्  २०
किं फलं तन्न जानामि तस्य देवस्य दर्शने
पुरुषोत्तमं मेवाथ भजन् संपूजयन् नरः
एकाम्रवने नूनं नरो मुक्तिमवाप्नुयात्  २१
एकाम्रकं गमिष्यामि द्रक्ष्यामि पुरुषोत्तमम्
इत्युच्चरति यस्यास्ये सोऽपि विष्णुपुरं व्रजेत्  २२
तथा तीर्थानि सन्त्यज्य एकाम्र पुरूषोत्तमः
यद्धि वेदे पुराणे च प्रणवः जप्यते सदा
स एव प्रणवो नित्यं भाति पाषाणदेहभृत्  २३
यदेव परमं ब्रह्म ब्रह्मलोके पितामहः
चतुर्वेदेषु शास्त्रेषु ब्रह्मैतत्तच्छिलाङ्गकम्  २४
तत्र विन्दूद्भवे स्नात्वा यः पश्यन्मुखपङ्कजम्
जीवन्नेव कृतार्थस्तु स भवेन्नात्र संशयः  २५
मुखपद्मं समालोक्य तस्य श्रीब्रह्मरूपिणः
सनकाद्याः शुकाद्याश्च परं निर्वाणमाययुः  २६
कृष्ण कृष्णेति गायन्ति तस्याग्रे ये नरोत्तमाः
भावनादी भक्तबन्धुस्तेभ्यो मुक्तिं प्रयच्छति  २७
यस्तु तच्चरणोद्भूतमुदकं पिवते नरः
बहिरन्तर्गतं पापं तस्य नश्यति नान्यथा  २८
दण्डप्रणामं कुरुते यस्तं मर्त्यो जनार्दनम्
तस्य सत्यं भवेत् पुण्यमश्वमेधशतोद्भवम्  २९
तस्य श्रीवासुदेवस्य लीलया च प्रदक्षिणे
पदात्पदाद्विनश्यन्ति ब्रह्म हत्या सहस्रशः  ३०

एकाम्रविपिने विप्रा देवदेवो जनार्दनः
तदेव परमं ब्रह्म परमानन्ददायकः ३१
एकाम्रे परमं ब्रह्म वासुदेवेति संज्ञकः
भक्तिं पाषाणवपुषा मुक्तिदोऽसुरनाशनः ३२
तस्याग्रे जपेन्मन्त्रं तं ध्यायन् पुरुषोत्तमम्
स एव याति वैकुण्ठं नरो विष्णुपरायणः ३३
कृत्वा कार्य्यमकार्य्यं वा दृष्ट्वैव तं जनार्दनम्
नरो वैकुण्ठमाप्नोति नान्यथा मुनिसत्तमाः ३४
वासुदेवस्य वैकुण्ठं स्थानं जानीथ वै द्विजाः
सर्वदा तत्र यस्तिष्ठेज्जीवन्मुक्तो भवेत्तु सः ३५
एवं नानागुणाः सन्ति वासुदेवस्य चक्रिणः
यस्य स्मरणमात्रेण ब्रह्महत्यादि गच्छति ३६
शङ्खचक्राङ्कितभुजं विपिनैकाम्रसंस्थितम्
कञ्जाक्षं पीतवसनं नीरदाभं हरिं भज ३७
इति मन्त्रं जपेद्यस्तु भक्तियुक्तेन तेजसा
वासुदेवो द्विजाः सत्यं तस्य मुक्तिं प्रयच्छति ३८
सहस्रयोजान्ते च शङ्खचक्रेति यो मनुम्
भजते दुर्लभां मुक्तिं प्राप्य शङ्खधरो व्रजेत् ३९
मन्त्रस्यास्य द्विजश्रेष्ठा उपदेशो न विद्यते
प्राणिमात्रेण जाप्यं च मुक्तिदं हरिमाव्रजेत् ४०
क्रूरे भक्तिविहीने च न दातव्यः परो मनुः
कर्तव्यं गोपनीयं च न वाच्यं च परे जने ४१
शङ्खचक्रमनुर्विप्रा मन्त्रराजःस्मृतोः बुधैः
गोपनीयः परो मन्त्रः गुह्यो वः कथितो मया ४२
तस्मिन् पुण्यवने विप्रा लिङ्गं ब्रह्मेश्वरं स्मृतम्
तस्य दर्शनमात्रेण ब्रह्मलोकमवाप्नुयात् ४३
भास्करेशं च मेघेशं गोकर्णेश्वरसंज्ञकम्
स्वर्णजालेश्वरं लिङ्गं स्वर्णकूटेश्वरं तथा ४४

एतान् दृष्ट्वा नमस्कृत्य पूजयित्वा प्रयत्नतः
सर्वं पापं परित्यज्य कैलाशनिलयं व्रजेत्  ४५
आग्नये देवदेवस्य लिङ्गं सूक्ष्मेश्वरं द्विजाः
अर्चयित्वा तमालोक्य पापराशिं परित्यजेत्  ४६
तत्रैवाम्रातकेशस्तु मध्यमेश्वर एव च
एतयोर्दर्शने विप्रा काशीवासफलं लभेत्  ४७
तत्रैव पिण्डं वितरन् पितृणां सूक्ष्मदक्षिणे
पितृनुद्धृत्य नरकाद्देवलोकं व्रजेन्नरः  ४८
तत्र सूक्ष्मेश्वरस्थाने पिण्डदानं करोति यः
स करोत्यक्षयां तृप्तिं पितृणां शिरसा नमन्  ४९
विशेषं कथयिष्यामि देशकालं यथा द्विजाः
आश्विने मास्यमावस्यां यतात्मा नियतः शुचिः  ५०
यः कुर्य्यात्पिण्डदानं च श्रीसूक्ष्मेश्वरदक्षिणे
पितरस्तस्य तुष्यन्ति कल्पकोटिशतान्तरे  ५१
तस्य पश्चिमदिग्भागे कपिलेश्वरसंज्ञकः
सर्वकामप्रदो देवः पूजितः कपिलेन सः  ५२
कपिलेशं शुभं लिङ्गं देवाभिष्टप्रदायकम्
प्राणिनामीप्सितानां च मनोरथफलप्रदम्  ५३
तत्र श्रीकापिलं कुण्डं सर्वतीर्थफलप्रदम्
तस्मिन्स्नात्वा वनं दृष्ट्वा ह्यक्षयं फलमाप्नुयात्  ५४
तत्र उग्रेश्वरं लिङ्गं कौवेरीदिशमास्थितम्
दशलक्षैकलक्षाणां लिङ्गानां प्रभुरेव सः  ५५
तं दृष्ट्वा प्रीतियुक्तेन लक्षैकादशमाप्नुयात्
तत्र नन्दीश्वरः साक्षाद्देवाग्रे भृकुटीस्तथा  ५६
तौ दृष्ट्वा च नमस्कृत्य सुखमाप्नोति मानवः
यमेश्वरस्तु तत्रास्ते मारुतीदिशमास्थितः  ५७
तं पश्यन्तं नरं विप्रा यमदण्डो न बाधते
तस्याग्रे परमं तीर्थं पापनाशनसंज्ञकम्  ५८

पापानि विलयं यान्ति तज्जले स्नानमात्रतः
मार्गशीर्षे कृष्णपक्षे ह्यष्टम्यां च द्विजोत्तमाः ५९
तत्र स्नात्वा पितॄन्तर्प्य यः पश्येद्यमवारुणौ
तस्य तुष्टो भवेच्छम्भुः कलिकाले विशेषतः ६०
तत्राष्टतीर्थं विधिवद्यः करोति नरोत्तमः
शिवलोकं समासाद्य न त्यजेत्स कदाचन ६१
कुण्डस्य दक्षिणे भागे ईशानेश्वरसंज्ञकः
तमाश्रयित्वा विधिवत् पदमैन्द्रमवाप्नुयात् ६२
एकाम्रकाननं पुण्यं कोटिलिङ्गाभिपूरितम्
कोटितीर्थसमायुक्तं देवानां जयवर्द्धनम् ६३
अनेकानि च लिङ्गानि तत्र सन्ति द्विजोत्तमाः
संख्यां तां शिवलिङ्गानां वक्तुं शेषो न शक्नुयात् ६४
कः शक्नोति गुणान् वक्तुं क्षेत्रस्यैकाम्रकस्य च
आश्रमाणि च रम्याणि तत्र सन्ति महर्षयः ६५
किंचित्प्रोक्तं मया विप्रा भवतामिहमुत्तमम्
किमन्यच्छ्रद्धया श्रोतुमिच्छथ परमन्तपाः ६६

इति श्रीकपिलपुराणे एकाम्रके नानालिङ्गवर्णनं नाम
चतुदशोऽध्यायः १४

## अथ पञ्चदशोऽध्यायः

ऋषय ऊचुः
पुनः किमस्ति परममाश्रमं मुनिसत्तम
ब्रूहि सर्वमशेषेण तस्मिन्नेकाम्रकानने १
भरद्वाज उवाच
तस्मिन् पुण्यवने विप्रा देवदेवस्य चोत्तरे
रामेश्वर इति ख्यातो रामचन्द्रेण पूजितः २
रामचन्द्राश्रमे तच्च स्थानं पुण्यप्रदं शुभम्
नानामुनिगणाकीर्णं ब्रह्मवासववन्दितम् ३

बकुलैः पनसैराम्रैः पादपैरुपशोभितम्
खगानेकैर्मृगानेकैः समन्तात्परिपूरितम् ४
तत्स्थानं रघुनाथस्य तपोवृद्धिकरं महत्
तत्रास्ते जानकीनाथो नित्यमर्चति तं शिवम् ५
तत्राध्वरसमुद्भूतं तस्य लिङ्गस्य पश्चिमे
अशोकवारविख्यातं तीर्थं पापप्रणाशनम् ६
अशोकादधिकं तीर्थं नास्त्यत्र पृथिवीतले
यत्र स्नात्वा नरो विप्रा शिवलोकं च गच्छति ७
यः स्नाति तत्र संरम्भाद्ध्यात्वा हृदि महेश्वरम्
शुक्लाष्टम्यां विशेषेण स पापेषु न लीयते ८
दिश्युत्तरस्यां विख्यातं ससोश्चमुनिसत्तमाः
सर्वपापहरं रम्यमाश्रमं चोत्तरेश्वरम् ९
अग्रे देव्या तथेशस्य जपन् वै संयतात्मवान्
त्रिपद्मसंयुतं रम्यं पूरितं मुनिसत्तमैः १०
अशोकैर्नीपलोध्रैश्च वकुलैर्नागकेशरैः
मालतीमाधवीयुक्तं श्रेष्ठपदपसंयुतम् ११
तथैवाम्रैरामलकैः सफलैरुपशोभितम्
करवीरैः कर्णिकारैः पाटलैः सहकारकैः १२
एवं नानाविधैर्वृक्षैः पूरितं सुमनोहरम्
तत्र सिद्धेश्वरं लिङ्गमास्ते मुक्तिप्रदायकम् १३
मध्ये पुष्करिणीरूपा यमोत्पलसुशोभिता
दिव्यतोया सदापुण्या शीतला चपकर्दमाः १४
सिद्धेश्वरं समाराध्य मुनयः परमन्तपाः
प्राप्ता चैवोत्तमा सिद्धि रिहलोके परत्र च १५
सिद्धेश्वरात् परो देवो न भूतो न भविष्यति
यं दृष्ट्वा मुच्यते पापान्नास्ति ब्रह्मघ्नता नरे १६
शिरसा नतदेहस्तु प्रणामं विदधातिं यः
स एव भगवान् विष्णुः स एव भगवान् शिवः १७

चतुर्दशसु लोकेषु य सिद्धो भगवान् शिवः
शिव एकत्वमायाति तस्मात् सिद्धैश्वरः स्मृतः १८
तं दृष्ट्वा मुच्यते पापं स्पृष्ट्वा दीर्घायुराप्नुयात्
पूजया मुक्तिमाप्नोति सत्यं सत्यं मयोदितम् १९
अस्य दक्षिणपार्श्वेऽस्ति कुण्डं पापप्रणाशनम्
विख्यातं तस्य नाम्ना तु स्नात्वा तोयं सुनिर्मलम् २०
तत्र स्नात्वा सकृल्लोकः नाकपृष्ठे च मोदते
तत्र सिद्धेश्वरस्याग्रे यो जपेन्मन्त्रमुत्तमम् २१
तन्मन्त्रं सिद्धिदं तस्य समासान्नात्र संशयः
तत्र मुक्तेश्वरं लिङ्गं मुक्तिदं पापानाशनम् २२
अभ्याशे तस्य लिङ्गस्य तं दृष्ट्वा मुच्यते नरः
एवं मया मुनिश्रेष्ठा गदितं क्षेत्रमुत्तमम् २३
कपिल उवाच
श्रुत्वेत्थं वचनं तस्य भरद्वाजस्य भो नृप
सानन्दा मुनयः सर्वे पुनः पप्रच्छुरादरात् २४
कृतार्थाश्च वयं सर्वे सत्यं सत्यं न संशयः
पुनः पृच्छा च नो जाता क्षेत्रस्यात्यन्तिकी प्रिया २५
सिद्धेश्वरसमीपे तु यानि लिङ्गानि सन्ति वै
तानि नो वद विप्रेन्द्रा यद्यस्ति करुणा तव २६
शृणुध्वं मुनिशार्दूला लिङ्गं सिश्रेश्वरं शुभम्
पूर्वं तं पूजयामास विडौजास्तु शचीपतिः २७
श्रुत्वेत्थं वचनं तेषाम् ऋषीणां भावितात्मनाम्
उवाच वचनं रम्यं भरद्वाजो महामतिः २८
भरद्वाज उवाच
अग्रे सिद्धेश्वरस्याथ सर्वसिद्धिप्रदायिनः
पूर्वस्यां दिशि देवस्य देव इन्द्रेश्वरः स्मृतः २९
तत्र यज्ञं चकारेन्द्रः सर्वदेवैर्वृतो द्विजाः
चक्रुर्विघ्नं दितिसुताः कृते यज्ञे विडौजसि ३०

चक्रेऽसौ दितिदायादैः महायुद्धं बलान्वितैः
ततः पराजितः शक्रः देवानां शरणं गतः ३१
उवाच शङ्करं वीक्ष्य त्राहि मां परमेश्वर
दैत्यैश्च निजितोऽहं वै यज्ञकाले जयप्रदः ३२
ततः तद्वचनं श्रुत्वा महादेवोऽभ्यभाषत
त्वदर्थं हि शचीनाथ शमयिष्यामि दानवान् ३३
इत्युक्त्वा सोऽतिवेगेन उपस्थाय तु धूर्जटिः
जघान दानवान् सर्वान् विष्णुनामितवर्चसा ३४
दत्वा वरं मघोनेऽथ तत्रैवान्तरधीयत
ततो वृद्धश्रवा लिङ्गे पूजयामास शङ्करम् ३५
सम्पूज्य विधिवल्लिङ्गं धूपदीपमनोहरैः
चन्दनेन सुगन्धेन जगामाप्यामरवतीम् ३६
एवमिन्द्रेश्वरोत्पन्नं प्रख्यातं च पुरानघाः
इन्द्रेश्वरमाहात्म्याद्विलयं यान्ति कल्मषाः ३७
एतदिन्द्रेश्वरस्थानं सर्वपुण्यप्रदं मतम्
नानामुनिजनाकीर्णं सर्ववृक्षविराजितम् ३८
येऽर्चयन्ति तमीशानं भक्तास्तु नरसत्तमाः
प्रेत्य ते यान्ति परमं स्थानं यद्देवदुर्लभम् ३९
येऽर्चयन्ति तमीशानमपि दुर्वाङ्कुरैर्नराः
ते यान्ति विमलं स्थानं भासमानाः सुतेजसः ४०
इत्थमिन्द्रेश्वराख्यानं कथितं मुनिसत्तमाः
सर्वपापहरं पुण्यं परमं स्वस्त्ययनं महत् ४१
य इदं शृणुयादार्षं वाचकं च न पूजयेत्
चक्षुषी तस्य कर्णौ च बधिरीभवतो द्विजाः ४२
तस्मात्फलैश्च वस्त्रैश्च तं स्वर्णैश्च प्रपूजयेत्
एवमिन्द्रश्वरो नूनं स्वभक्तेषु प्रसीददति ४३

इति श्रीकपिलपुराणे इन्द्रेश्वराख्यानं नाम
पञ्चदशोऽध्यायः १५

## अथ षोडशोऽध्यायः

भरद्वाज उवाच
अथ वक्ष्ये महापुण्यं नमस्कृत्य महेश्वरम्
दक्षिणे सिद्धिनाथस्य केदारेश्वरसंज्ञकम्  १
केदारेशस्थलीं प्राप्य नरो भक्तिपरायणः
पूजयित्वा महेशानमाप्नुयात्फलमीप्सितम्  २
दक्षिणामूर्तिनामाऽसौ सर्वसिद्धिप्रदायकः
फलन्तु दर्शनेनास्य वाजपेयाश्वमेधयोः  ३
लिङ्गस्य पश्चिमे चैव दक्षिणे चोत्तरे तथा
सदा सेवन्ति योऽन्तश्च पुनात्यखिलभूर्भुवम्  ४
यो नरो वा शिरोऽभ्युक्ष्य नरः शिवपरायणः
दुरितं नाशयत्याशु केदारेशप्रसादतः  ५
तस्यां स्थल्यां तु देव्यास्ते गौरीत्रैलोक्यसुन्दरी
विशेषतो युगप्रान्ते साधकानां वरप्रदा  ६
त्रयाणां जगतां माता गौरीरूपेण संस्थिता
तस्यास्तु दर्शने राजन् लोकनाथः प्रसीदति  ७
एनामासादयेद्देवीं मन्त्राणां फलरूपिणीम्
यामुपास्य पुरा राजा नहुषोऽभून्महीतले  ८
सा तत्रैव पुरा चक्रे कुण्डं केदारसंज्ञकम्
विविक्तं निर्मलजलं सोपत्तिपदसंयुतम्  ९
विन्दूद्भवे तनुत्यागात् श्रीसूक्ष्मे पिण्डदानतः
केदारे उदकं पीत्वा पुनर्जन्म न विद्यते  १०
नवम्यामसिते पक्षे मूर्ध्नि दत्वाऽमितं फलम्
स्नात्वा तस्मिन् ह्रदे विप्राः किम्वा न लभते नरः  ११
तत्र श्रीदक्षिणामूर्तेरग्रे पीठो महान् स्मृतः
तव पीठेति विख्यातः साधकनां फलप्रदः  १२
नक्तव्रतं समास्थाय संयतात्मा जितेन्द्रियः
जप्त्वा त्रयोदशाहेन मन्त्रसिद्धिमवाप्नुयात्  १३

यस्य केदारके स्थाने मन्त्रसिद्धिर्न जायते
विंशतिजन्मना तस्य सिद्धिर्न स्यात्कथञ्चन १४
केदारस्थानमासाद्य किञ्चिज्जप्त्वा मुनीश्वराः
न नरो नरकं याति सत्यं सत्यं पुनः पुनः १५
स्नात्वा केदारके तीर्थे दृष्ट्वा गौरीं महेश्वरम्
सकृज्जप्त्वा भवंत्पीठे कृतकृत्यो भवेन्नरः १६
कथयामि पुरावृतं केदारे तत्र वै द्विजाः
श्रुत्वा पापं परित्यज्य पुण्यराशिं गमिष्यथ १७
दक्षसत्रे प्रवृत्ते च बासवाद्याश्च देवताः
हविर्भागं विभुञ्जन्ति दत्तं देवामहीश्वराः १८
तदा दाक्षायणी देवी ज्ञात्वा पत्युर्विगर्हितम्
प्रविवेश स्वयं वह्नौ भर्तुर्भक्तिपरायणा १९
ततो महेश्वरो देवो दक्षयज्ञं व्यनाशयत्
पलायन्तेस्म देवाश्च भयाद्रुद्रस्य कल्पिताः २०
कृत्तिवासाः जगामाथ हिमवन्तं नगेश्वरम्
ततश्च तारकेनापि कामेन सर्वपुष्टिदम् २१
साऽपि साध्वी हिमवतो जाता कमललोचना
पूजयामास तं देवं प्रेषिता जनकेन च २२
कन्दर्पस्तत्र गत्वा च ब्रह्मण्यस्य तपस्विनः
पार्वतीसम्मुखं देवं प्रेषयामास कार्मुकान् २३
धृते धनुषि कामेन सशरे कृत्तिवाससः
तृतीयचक्षुषो वह्निः पपात मदनोपरि २४
दग्धकामशरीरोऽसौ महादेवो जगद्गुरुः
ज्ञात्वा नारायणीं देवीं उपयेमे समाधिना २५
ततो नगे हिमवति तस्थौ देवो महेश्वरः
पार्वत्या सह स देवो विजहार यथासुखम् २६
मेनोवाचाऽथ तनयां स्थानं नास्त्यपि किं तव
युवां संगच्छतां स्थानं तवैतत्सुखदं न हि २७

स्त्रीणां पितृगृहे वासो निन्दितव्यः पुनः पुनः
जानतैवं भवेन्निन्दा न स्थेयं श्वशुरगृहे २८
इति श्रुत्वा हैमवती कोपप्रस्फुरिताधरा
बहुधा विलपन्ती सा भवायेदं जगाद ह २९
ईश्वरस्त्वं महाबाहो सर्वशक्तिसमन्वितः
स्थातुं स्थानं न मे आस्ते किमेतद्धि भवद्गृहे ३०
देवदेव तवादेशात्स्थानमेकञ्च कल्पय
कृशानुरेताः तत्स्थाणुः स्थानं संत्यज्य सत्वरम्
ययौ सर्वगणैः सार्द्धं मध्यदेशं तदा शिवः ३१
पूर्वसागरगमिन्या गङ्गाया उत्तरे तटे
वाराणसीं नागपुरीं निर्ममे पार्वतीहिते ३२
तत्र तिष्ठन् जगन्नाथो नारदं पर्यपृच्छत्
एकान्तं परमं पुण्यं कुत्रारण्यं महामुने ३३
वाराणस्यां मम प्रीतिर्ततो निन्दाप्यनेकधा
गङ्गा सकलपापघ्नी यत्रास्ते मणिकर्णिका ३४
वाराणस्यां तनुत्यागाद्ब्रह्मविद्या व बोधनात्
द्वाभ्यामेव भवेन्मुक्तिः नात्स्यन्यन्मुक्तिकारणम् ३५
इयं बहुजानाकीर्णा बभूव मुनिसत्तम
अतो मनो न रमते मम नारद निश्चितम् ३६
इत्युक्त्वा नारदेनासौ स ययावाम्रकं वनम्
लिङ्गरूपधरस्तस्थौ नत्वा श्रीपुरूषोत्तमम् ३७
ज्ञात्वा तत्सर्ववृतान्तं हिमवान् पर्वताधिपः
स्त्रीभिः सर्वपरिवृतो मैनाकेन च मेनया ३८
गङ्गया लोकपावन्या मुनिभिस्तत्त्वदर्शिभिः
आजगाम वनश्रेष्ठमाश्रमं मुनिसत्तमाः ३९
विन्दुतीर्थेगिरौःस्नात्वा दृष्ट्वा नारायणं हरिम्
देवस्य द्वारमासाद्य स्तौति स्तुत्याऽनया तदा ४०
हेमबाहुरुवाच

आदिकन्द नमस्तुभ्यं नमस्तेऽव्यक्तयोनये
कामचारणसिंहाय सर्वेप्सितप्रदाय च ४१
भक्तप्रियः नमस्तुभ्यं विष्णुचक्रप्रदाय च
त्रिपुरघ्नः नमस्तेस्तु नानासुरवरप्रद ४२
नागार्जुनसहायस्त्वं काशीराजवरप्रद
विद्यागोप्ता लोकसाक्षी अन्धकदीपकेशरी ४३
नमो मोक्षप्रदात्रे च भगीरथवरप्रद
नीलकण्ठ नमस्तुभ्यमुमाप्रियकृते नमः ४४
नमस्ते सच्चिदानन्द कुमारगुरवे नमः
रामचन्द्रप्रतिष्ठात्रे पञ्च ब्रह्म नमोऽस्तुते ४५
क्षेत्रेशपरमेशान ह्यपराधः कुतो मया
इदानीं करुणापङ्गैः पूरयस्व मनोरथम् ४६
इति स्तुत्वा बहुभिः वचोभिर्नीललोहितम्
पपात भूभृतां श्रेष्ठः तदा स अवनीतले ४७
ततो दृष्ट्वा गिरिवरममृताक्षरभाषिणम्
स्तुत्वा नम्रेण सन्तुष्टो महादेवोऽभ्यभाषत ४८
किमिच्छसि गिरिश्रेष्ठ किं हि कामं यथेप्सितम्
सन्तुष्टो वरदोऽहं च स्तोत्रेणानेन वाऽनघ ४९
इति श्रुत्वा वचस्तस्य धूर्जटेः हिमवांस्तदा
वध्वाञ्जलिं करपुटे वाचमूचे प्रियम्बदाम् ५०
अस्मिन् क्षेत्रे जगन्नाथ त्वदीयं लिङ्गमुत्तमम्
दिदृक्षुरस्मि तत्राहं प्रसादं कुरु धूर्जटे ५१
यतो मे वेश्म संत्यज्य आगतस्त्वं सहोमया
अतो दिदृक्षुः स्त्रीं साध्वीमागतोऽहं त्वदालयम् ५२
एतस्यां महतीं प्रीतिं पृष्ट्वा वन्धु जनस्य मे
जायते महती प्रीतिरनुरागो विवर्धते ५३
अधुना बहुभिः रत्नैः प्रासादं करवाणि ते
आज्ञापय महेशान यद्यस्ति करुणा मयि ५४

गिरीन्द्रमथ देवेशो वाक्यमेतदुवाच ह
दुर्लभं देवताभिश्च किं त्वया प्रोषितं गिरे  ५५
ब्रह्मणा विष्णुनेत्रेण अनेन वरुणेन च
प्रासादस्तु ह्यसाध्योऽयं कलौ चन्द्रः करिष्यति  ५६
इदानीं मत्समं लिङ्गं केदारेश्वरसंज्ञकम्
सिद्धेश्वरसमीपे च प्रसादं कुरु सुव्रत  ५७
तत्राऽहं सर्वभावेन साधकानां वरप्रदः
तत्र ते तनया गौरी ह्यस्मत्प्रीतिविवर्द्धिनी  ५८
आस्ते लोकोपकाराय क्रतुं कृत्वा स्वपाणिना
रूपं सौम्यप्रदं सूक्ष्मं विविक्तं सुमनोहरम्  ५९
मन्त्रेणानेन विधिवद् विभज्योत्कुण्डवारिणि
गौरी कृतः नमस्तुभ्यं सर्वकामफलप्रदम्  ६०
पापापनोदं कुरु मे निमज्जेऽहं तवाम्भसि
इत्युक्त्वा त्रीणि वारीणि निमज्जेत तु वारिणि  ६१
कृताञ्जलिपुटो भूत्वा देवस्तोत्रमुदीरयेत्
दक्षिणामूर्तये तुभ्यं वटमूलनिवासिने  ६२
ध्यानैकनिरताङ्गाय नमो रुद्राय ते नमः  ६३
एवं यः कुरुते धीमान् शुचिस्तद्गतमानसः
कैलासभुवनं याति स नरो नात्र संशयः  ६४
नवम्यां शुक्लपक्षस्य इषे मासि विशेषतः
दत्वा कृष्ण तिलान् मूर्ध्नि यो मज्जेत्पार्वतीह्रदे  ६५
स यात्याखण्डलस्थानं विमानेन विराजितः
शुचिरूर्ध्वगतिस्तत्र ब्रह्मणः सदनं परम्  ६६
गच्छ तत्र गिरिश्रेष्ठ कुरुष्वाचमनं मम
पूजयस्व प्रयत्नेन मदीयं लिङ्गमुत्तमम्  ६७
वाचमित्येव स प्राह गिरीशं प्रहसन्निव
यास्ये तद्वचनं शम्भो करवाणि न संशयः  ६८
इत्युक्त्वा गोत्रराजाऽसौ प्रासादं बहुविस्तृतम्

प्राङ्गणैः विततैर्युक्तं तोरणैश्च समन्ततः ७०
बहुकोशप्रपूर्णञ्च छत्रव्यजनसङ्कुलम्
चकार विधिवत्प्राज्ञो येन तुष्यति शङ्करः ७१
पूजां तत्र महेशस्य कृत्वा स्तुत्वा प्रणम्य च
तदादि कृतकृत्योऽभूत् समस्तैर्बान्धवैर्वृतः ७२
ततो गन्धवतीनाम्नीं गंगां चात्र विसृज्य च
ययौ गोत्रकुलश्रेष्ठः स्वस्थानं हरमुक्तये ७३
एतत्तीर्थवरमं विप्रा श्रुतमं त्रैलोक्य पावनम्
सर्वपापघ्नमतुलमं मुनीनां प्रीतिवर्धनम् ७४
योऽसौ वै दक्षिणामूर्तिः महेशस्य प्रकीर्तिता
तत्तुल्या कर्मभूमौ च फलदा नास्ति देवता ७५
तस्यैव सन्निधानेन रुद्रलिङ्गवरः स्वयम्
नामभिः पूजितश्चायं नामशान्तिशिवेति वा ७६
दृष्ट्वा शान्तशिवं विप्रा सर्वशान्तिमवाप्नुयात्
शान्तात्मा विजितात्मा च याति सत्यं शिवालयम् ७७
नाम्ना शान्ताशिवोलिङ्गो दक्षिणामूर्तिरित्यसौ
एनं पूज्य नमस्कृत्य शिवसायुज्यमाप्नुयात् ७८
केदारेश्वरमाख्यानं च इदं कीर्तयेन्नरः
शृणुयाद्वा नरो यस्तु तस्य वै शाश्वती गतिः ७९

इति श्रीकपिलपुराणे केदारे हिमवदागमनं नाम
षोडशोऽध्यायः १६

## सप्तदशोऽध्यायः

ऋषय ऊचुः
पुरा हिमवता त्यक्ता तत्र गन्धसरित्कथम्
एतन्नो वद विप्रर्षे कामदं सर्वमङ्गलम् १
तस्यास्तीरे पर्वताश्च लिङ्गानि विविधानि च
ब्रूहि नस्तीर्थयुक्तानि फलदानान्यशेषतः २

भरद्वाज उवाच
कथयामि मुनिश्रेष्ठा यूयं यत्परिपृच्छथ
शृणु तैकमनोयुक्ता यदि श्रद्धा च वर्तते ३
न सन्ति त्रिषु लोकेषु नद्यो गन्धवतीसमाः
यस्या दर्शनमात्रेण नरो मुच्येत कल्मषात् ४
आदाद्य यां पुरा विप्रा ययुः सप्तर्षयो दिवम्
पावनीं सर्वभूतानां तां नदीं को न संश्रयेत् ५
आजगाम यदा विप्रा हिमवान् पार्वताधिपः
तदाऽत्र देवं सम्पूज्य केदारेश्वरमुत्तमम् ६
क्ष्माभृत्प्रभुः कृतार्थात्मा तल्लिङ्गार्चनजैः सुखैः
ननन्दारमुवाचेदं जाह्नवीं गिरिशप्रियाम् ७
गङ्गे भागीरथीनाम्ना यथाऽऽख्यास्ति तवाच्युते
तथा हैमवतीनाम्ना इति मामं मुनयोऽवदन् ८
त्वयेत्यलङ्कृतोऽहञ्च बहुपुत्रोऽपि निम्नगे
बहुरत्नैः पयोभिश्च यथा कुमुदवान्धवः ९
क्षेत्रेऽस्मिन्नधुना गङ्गे कीर्तिः परमशाश्वती
मम स्थापितपापघ्ने त्वमत्र स्थितिमाचर १०
गङ्गा च नवधा प्रोक्ता ह्यधुना दशधा भव
ब्रह्महत्यादिपापानां नाशिनीपुण्यवर्द्धिनी ११
आद्या गोदावरी गङ्गा द्वितीया या पुनः पुनः
तृतीया कथिता रेवा चतुर्थी जाह्नवी स्मृता १२
कावेरी पञ्चमी प्रोक्ता षष्ठी वै गोमती तथा
कृष्णा च सप्तमी प्रोक्ता ब्राह्मी ह्यष्टम्युदाहृता १३
नमवी वै वैतरणी नवधा चेति विश्रुता
अधुनैकाम्रके देवि सशरीरा तव शुभे १४
गोदावरी गोमती च कृष्णा चैव पुनः पुनः
ब्राह्मी रेवा च कावेरी तथा वैतरणी स्मृता १५
जाह्नवी च ततः प्रोक्ता ततो गङ्गा महासरित्

इत्येता दशधारा च क्षेत्रेऽस्मिन् तु सुरार्चिते १६
इति तस्य वचः श्रुत्वा गङ्गोवाच हिमालयम्
यूयं मे गुरवस्तात करवाणि वचस्तव १७
ख्यातिं चात्र गमिष्यामि केन नाम्ना गिरीश्वर
तन्नाम वद मां शीघ्रं यद्येवं प्रीतिरस्तिते १८
हिमवानुवाच
काननोद्भवपुष्पाणां केतकीनां लतान्तरे
केशराणां च पद्मानां चम्पकानां विशेषतः १९
फलानां वायुसंसर्गाद्गन्धलाभाद्महीतले
नाम्ना गन्धवती गङ्गे भवैकाम्रवने शुभे २०
अत एव मम प्रीतिर्भविता महती त्वयि
शङ्करस्त्वयि सन्तुष्टो भविता नात्र संशयः २१
वाचमित्येव सा प्राह हिमवन्तं नगोत्तमम्
ववाह दक्षिणे गङ्गा सागरं काननान्तरे २२
ततो वै पुष्पवृष्टिस्तु शक्रादिकरसंच्युता
पपात हिमवन्मूर्ध्नि देवदुन्दुभिपूर्वकम् २३
कृतकृत्यस्ततो ग्रीवो जगाम स्वाश्रमं द्विजाः
गङ्गा गन्धवती नाम्ना दक्षिणार्णवगामिनी २४
एवं मया निगदिता नाम्ना गन्धवती सरित्
एकाम्रके वने विप्रा गङ्गा प्रच्छन्नरूपिणी २५
पुनराख्यानकं वक्ष्ये गन्धनद्या महीसुराः
श्रुत्वा पापक्षयं याति सुकृतं चापि वर्द्धते २६
पुरा श्रुता मया विप्रा या कथा पुलहाश्रमे
तामहं सम्प्रवक्ष्यामि शृणुध्वं चैकचेतसः २७
अथैकदा हि देवर्षिः तिष्ठासुर्मुनिसत्तमाः
वदरिकाश्रमे पुण्ये ययौ तत्र च नारदः २८
दृष्ट्वा च मुनयः सर्वे नारदं योगिनाम्वरम्
बलिभिर्बहुभिश्चैव सन्तोष्यैवं तमब्रुवन् २९

ऋषय ऊचुः
दर्शनेन त्वदीयेन देवर्षे मुनिपुङ्गव
कृतार्थाश्च भवामोऽद्य तीर्थं शुश्रूषवो वयम्  ३०
कस्मिन् क्षेत्रेऽथवा तीर्थे नद्यां कस्यां द्विजोतमाः
धर्मो नानाविधः प्रोक्तः स्वल्पोऽप्यक्षयमेधते  ३१
शिवाश्रमाणि रम्याणि कस्मिन् सन्ति महोदधौ
कुत्र पुण्यतमे क्षेत्रे नृभिर्मुक्तिरवाप्यते  ३२
नारद उवाच
नाना क्षेत्राणि तीर्थानि नद्यस्तु बहवस्तथा
तिष्ठन्ति हि महीपृष्ठे पापिनां सिद्धिहेतवे  ३३
तथापि स्थानमेकन्तु विविक्तं चक्रपाणिनः
तत्र ते च सर्वगुणा यद्यूयमं परिपृच्छथ  ३४
महोदधेरुत्तरतः त्रिभिर्योजनमायतम्
एकाम्रकं वनं चास्ति आगतानां रतिप्रदम्  ३५
स्वर्णवर्णगिरिरम्ये कोटिलिङ्गावृतो विभुः
भूतेशश्च महाभाग आस्ते तत्र महाहरः  ३६
अक्षयञ्च भवेत् सर्वं नूनं वित्तं प्रकल्पितम्
प्रदत्त कन्यावस्त्रादि मधुसर्पिगुणादिकम्  ३७
तत्क्षेत्रेसर्वदानेभ्यो ह्यन्नदानं विशिष्यते
अन्नदानात्परमंदानं नास्त्यन्यत्पृथिवीतले  ३८
अन्नमासाद्य तिष्ठन्ति प्राणाश्चैव तु प्राणिनाम्
विनान्नेन न जीवन्ति प्राणिनः प्राणविह्वलाः  ३९
तस्मादन्नप्रदातारः प्राणदातार एव हि
अर्थिभ्योऽन्नं प्रदातव्यं नार्थिभ्यश्च कदाचन  ४०
एवं सर्वाणि दानानि अर्थिभ्यश्च प्रदापयेत्
तस्मिन् क्षेत्रे वरे पुण्ये दानमल्पतरं बहु  ४१
स्नानं सन्ध्यादिकं कर्म सर्वं वृहन्न संशयः
गङ्गादिकेषु तीर्थेसु वारणस्यां द्विजोत्तमाः  ४२

या च कीर्तिः स्वर्णकूटे सा सिद्धिरेकवत्सरे
वाराणस्यां सहस्राब्दैर्यत्फलं समवाप्नुयात् ४३
एकाम्रके दिनैकेन तत्फलं पश्य संयमे
प्रयागात्पुष्करात्काश्याः पञ्च पञ्च गयोच्यते ४४
प्रयाग--काशीफलदमेकाम्रं मुनिसत्तमाः
स्वर्णकूटाचले तस्मिन्पापिनां पुण्यकर्मणाम् ४५
तनुत्यागाद्भवेन्मुक्तिः किमत्र ह्यधिकं फलम्
त्यजन्ति तत्र ये देहं तेषां कर्णे महेश्वरः ४६
मन्त्रं मुक्तिप्रदातारं ब्रह्म तारकमादिशेत्
तस्मिंश्च वैष्णवे क्षेत्रे विष्णुस्तु परिपालकः ४७
तत्र विष्णुपराः सर्वे केचिन्माहेश्वरा जनाः
तत्र सिद्धैश्च सम्वादं गजानां परिशुश्रुमः ४८
नकुलैर्जिह्मगानाञ्च मार्जारैराखुनान्तथा
मित्राणि च यथा तत्र तथा शात्रव आत्मिकाः ४९
नान्योन्यं विरुध्यन्ति तत्क्षेत्रस्य प्रभावतः
नानाविधान्याश्रमाणि तत्र सन्ति महेशितुः ५०
पावकानि च तीर्थानि नदी विविधवाहिनी
तस्मिन्नास्ते क्षेत्रवरे नाम्ना गन्धवती सरित् ५१
आद्या गङ्गा समाख्यता त्रिकूटकलुषापहा
पुरा भगीरथेनाऽत्र तोषितस्तु सदाशिवः ५२
बभार शिरसा देवीं गङ्गां त्रैलोक्यपावनीम्
जटाकपाले रुद्रश्च श्रममाणः महातपाः ५३
नीता भगीरथेनात्र गङ्गा त्रैलोक्यपावनी
तां क्षेत्रमध्ये हिमवान् ससर्ज शिवभक्तये ५४
पावनार्थाय लोकानां कलिकल्मषनाशिनीम्
आद्यां गङ्गां विलसतीं त्रिकोटिकुलतारिणीम् ५५
पुण्यां गन्धवतीं नाम्ना मुनयो ब्रह्मवादिनः
पापिष्ठा ये च पाखण्डा तथा ब्राह्मणनिन्दकाः ५६

गुरुभक्तिविहीनास्ते स्नात्वा तत्र दिवङ्गताः
कलौ गन्धवती नाम्ना कृते भागीरथीति च ५७
त्रेतायां जह्नुतनया द्वापरे हरिपादजा
एवं नामानि च पुरा कीर्तितानि मनीषिभिः ५८
चत्वारि त्रिषु लोकेषु चतुर्षु च युगेषु च
कलावन्तर्हिता गङ्गा त्रैलोक्यपावनी हि सा ५९
नरकं याति पापीयान् ब्रह्मस्वहारको यथा
तस्याः सरिद्वारायास्तु स्नानमन्त्रनिरोधतः ६०
यस्याः संस्पर्शनादेव स्वर्गादिसुखमाप्नुयात्
गुप्तगङ्गे नमस्तुभ्यमृषिदेवाभिवन्दिते ६१
निमज्जेऽहं महाभोगे मां समुद्धर पातकात्
इत्युक्त्वा मज्जयेत्तस्यां शम्भवि कलुषापहे ६२
विशेषतः कलियुगे त्रिकोटिकुलपावनी
ततः पापानि संत्यज्य ब्रह्मत्यादिकानि च ६३
जिहीते त्रिदिवं सत्यं शृणुध्वं मुनिसत्तमाः
गन्धवत्यां नरः स्नात्वा कृतकृत्यो भवेद्ध्रुवम् ६४
सर्वपापयुतो धीमान्गङ्गायां पिण्डदो यथा
तस्यास्तीरे महेशस्तु पर्जन्येश्वरविश्रुतः ६५
पूज्यपूज्यः पूरा सौर्ये वीतये कृतिवाससः
तस्यां स्नात्वा च दृष्ट्वा पूजयित्वा विधानतः ६६
नरः पापक्षयं कृत्वा राजसूयफलं लभेत्
तत्र मेधेश्वरं तीर्थं पापघ्नं पुण्यवर्द्धनम् ६७
तस्मिन्स्नात्वा नरो विप्राः शिवसालोक्यमाप्नुयात्
तस्यास्तीरेषु लिङ्गं च ब्रह्मणाऽराधितं पुरा ६८
ब्रह्मेश्वरमिति ख्यातं ब्रह्मलोकप्रदायकम्
ब्रह्मयज्ञोद्भवं तीर्थं तत्रास्ते जनपावनम् ६९
तत्र स्नात्वा महेशस्य पूजनादधनाशनम्
स्नात्वा गन्धवतीतीर्थे दृष्ट्वा ब्रह्मेश्वरं हरम् ७०

स्वकुलैरेकविंशत्या ब्रह्मलोकमवाप्नुयात्
गोकर्णेश्वरलिङ्गन्तु पुनस्तस्यास्तटे श्रुतम् ७१
सुधानाम्नैव पूज्यं तत् गोकर्णेनासुरेण च
गन्धनद्यां नरः स्नात्वा गोकर्णेश्वरमीश्वरम् ७२
शिवप्रीतिमवाप्नोति मन्त्रसिद्धिमवाप्नुयात्
गन्धनद्यास्तटे विप्राः पुनरुत्पलकेश्वरम् ७३
तत्र स्नानं पुजनं च मुक्तिलक्षणमुच्यते
पुनस्तस्यास्तटे विप्रा लिङ्गं भूमीश्वरं स्मृतम् ७४
दर्शने तस्य लिङ्गस्य भवभीतिर्विनश्यति
तटे तस्यास्तु लिङ्गानि त्रीणि सन्ति महीसुराः ७५
सूक्ष्मेश्वरस्तु प्रथमस्तत्र वाताम्रकेश्वरः
अनयोर्लिङ्गयोर्मध्ये मध्यमेश्वरसंज्ञकः ७६
सूक्ष्ममेवं समासाद्य ब्रह्मसायुज्यमश्नुते
पिण्डदानादिकं तत्र पितॄणां मुक्तिकारकम् ७७
तत्र पिण्डानि वितरन् पितृभिः सह मोदते
विशेषं कथयामि त्वां स्थानं तस्यां महीसुराः ७८
यत्र सूक्ष्मेश्वरो देवस्तत्र सा मुक्तिदायिनी
कलावन्तर्हिता गङ्गा दक्षिणां दिशमाश्रिता ७९
अहो गन्धवती पुण्या त्रिकोटिकुलपावनी
सकृत्स्नात्वा नरस्तस्यां जिहीते ब्रह्मणः पदम् ८०
इत्युक्त्वा नारदो धीमान् ययौ ब्रह्मगृहं ततः
गतेऽस्मिन्नारदे विप्राः सानन्दं मुनयो ययुः ८१
ततस्ते क्षेत्रमागत्य मुनयो हि जितेन्द्रियाः
चक्रुः स्नानं गन्धवत्यां ददृशुर्लिङ्गमीश्वरम् ८२
तर्पयित्वा शुद्धजले पितृनथ पितामहान्
पिण्डदानादिकं तत्र चक्रुस्ते सुसमाहिताः ८३
ततोऽत्र सुविमानानि जाम्बूनदनिभानि च
सहस्राणि स्वरूपाणि आगतानि महीतलम् ८४

तानारुह्य तदा विप्रा मुनयो ब्रह्मणः पदम्
ययुःसर्वकुलैः सार्द्धं दशसप्तशतेन च  ८५
अहोभाग्यमहोभाग्यं मुनीनां ब्रह्मवादिनाम्
सकृद्गन्धवतीस्नानं दुरितौघविनाशनम्  ८६
कैलाशनिलया विप्राः पाथेयं च मया श्रुतम्
भवतां प्रीतये नूनं कथिता पुण्यवर्द्धिनी  ८७
माहात्म्यं गन्धवत्याश्च श्रुत्वा पापं विनश्यति
दीर्घमायुरवाप्नोति सुकृतस्यापि वृंहणम्  ८८
यः शृणोति नरस्त्वेतदमाख्यानं पुण्यवर्द्धनम्
धनस्य सन्ततेस्तस्य विच्छेदो नैव जायते  ८९

इति श्रीकपिलपुराणे गन्धवत्यनुवर्णनं नाम
सप्तदशोऽध्यायः  १७

## अष्टादशोऽध्यायः

अथ प्रवक्ष्यामि महेशतीर्थं
श्रीपार्वतीपादविनिःसृतञ्च
कीर्तिञ्च वासं विनिहत्य तीर्थं
चकार देवी जनपावनाय  १
देवीपदद्वयं तीर्थं स्वर्णकूटे द्विजोत्तमाः
आस्ते सर्वपवित्रं च सरः सर्वनमस्कृतम्  २
ऋषय ऊचुः
कीर्तिः कस्य सुतोः विप्र स कुत्र स्थितवान् पुरा
वासश्चैवेति कः प्रोक्तः कया देव्या हतावुभौ  ३
कस्त्वकार्षीत्तीर्थवरं देवीपदविनिर्मितम्
विस्तरं वै महापुण्यां त्वं कथां कथयाऽशु नः  ४
प्रवक्ष्यामि मुनिश्रेष्ठाः कीर्तिर्नाम महासुरः
दुर्भिलस्य सुतो धीरो यादसश्च विनाशकः  ५
दुर्घषो दुर्विनीतश्च देवब्राह्मणकण्टकः

वासश्चैवेति तद्भ्राता विश्वस्य निधनोद्यतः ६
शतमेकोत्तरं तस्य भ्रातारः परिकीर्तिताः
सर्वे भीमबलाः भीमाः सह पर्वतवासिनः ७
परिहाय च तान् भातॄन् मृगव्याजेन हंसकः
त्रासितः सततं पित्रा ययावेकाम्रकं वनम् ८
तत्र दृष्ट्वा भगवती सहवासमयाचत
उवाचार्ये मम प्राणं देहि सुन्दरि रक्ष माम् ९
अहं कीर्तिरयं वासो नास्ति लोकेषु मत्समः
ऐश्वर्यगुणरूपाढ्यः सौभाग्यबलपूजितः १०
सीदामि त्वामहं दृष्ट्वा त्राहि मां वरवर्णिनि
रक्ष मामरविन्दाक्षि त्वं स्वं गात्रं प्रयच्छ मे ११
शीर्ष्णि तु इमौ पादौ यमो धृत्वा विभर्त्युत
तस्मिन् हते प्रिया नित्यं भवेयं नाऽत्र संशयः १२
इति तस्याः वचः श्रुत्वा सुहृष्टौ दुर्भिलात्मजौ
शक्तिभूतौ तदा धीरौ गिरिराजेन्द्रनन्दिनी १३
ततो सव्येन पादेन वासं जघ्ने महासुरम्
कीर्तिं वासुरराजं च देवा हर्षमवाप्नुवन् १४
स्फटिकामलपृष्ठे च पापघ्ने शिरसद्मनि
समागत्य ततो देवाः स्थानं चक्रुर्दिवौकसः १५
प्रीतये तत्र देव्यास्तु तीर्थं त्रैलोक्यपावनम्
मुनिभिर्बहुभिर्वन्द्यं लोकत्रयफलप्रदम् १६
फाल्गुनस्यासिताष्टभ्यां स्नात्वा देवीपदे नरः
गोपालनसमं भक्त्याऽभीष्टकाममवाप्नुयात् १७
एवं बहूनि तीर्थानि तत्र सन्ति द्विजोत्तमाः
किमन्यत्कथयिष्यामि क्षेत्रे तस्मिन् फलप्रदे १८
पवित्राणि च नामानि प्रवक्ष्यामि महीसुराः
येषां स्मरणमात्रेण निष्पापो जायते नरः १९
स्वर्णकूटो रसालश्च मेध्योष्मशिरसद्म च

लघ्वर्जितसिद्धशैलश्च स्वर्गस्थास्तपसरस्थली २०
नामान्येतानि शस्तानि पुण्यान्यघहराणि च
स्मर्तव्यं प्रातरुत्थाय सुखं नयति तद्दिनम् २१
कपिल उवाच
राजन्निदं वचः श्रुत्वा भरद्वाजस्य ते द्विजाः
सानन्दा मुनयः सर्वे पुनः पप्रच्छुरादरात् २२
मुनय ऊचुः
भगवन् श्रोतुमिच्छामः स्वर्णकूटे शिवालये
चातुर्मास्यव्रतेनैव किं वा फलमवाप्नुयात् २३
तत्र दानेन किं पुण्यं तपसा वाऽथ किं फलम्
अन्नदानेन किं पुण्यं व्रतं केन समाचरेत् २४
भरद्वाज उवाच
कथयामि महापुण्यं चातुर्मास्यविधिं द्विजाः
दिनेनैकेन क्षेत्रेऽस्मिन् काशीवासफलप्रदम् २५
करोत्येकाम्रके क्षेत्रे चातुर्मास्यं तु यः पुमान्
फलं काश्याः शतगुणं सहस्राधिकमाप्नुयात् २६
केदारे यत्फलं प्राप्तं यत्फलं पुरुषोत्तमे
तत्फलं कोटिगुणितं स्वर्णकूटाचले द्विजाः २७
कुरुक्षेत्रे चतुर्भिश्च ग्रहणे चन्द्रसूर्ययोः
एकाम्रे तत्फलं प्रोक्तं चातुर्मास्ये न संशयः २८
गोदावर्यां तु गङ्गायां तपस्तप्त्वा तु यल्लभेत्
तत्फलं तु दिनैकेन चातुर्मास्ये शिवालये २९
शयनान्तरमारभ्य यस्तस्मिन् निवसेन्नरः
वाराणस्याः प्रयागस्य फलं तत्राधिकं लभेत् ३०
यत्र सन्निहितो विष्णुर्वासवादिभिरावृतः
कस्तस्य शक्नुयाद्वक्तुं महात्म्यं विधिविस्तरम् ३१
कीर्तिवासास्तु यत्रास्ते देवदेवः सहोमया
को वाऽस्य शक्नुयाद्वक्तुं महात्म्यं विधिविस्तरम् ३२

युगान्यष्टौ तपस्तप्त्वा काश्यां बहुसुदारुणम्
या गतिस्तामवाप्नोति चातुर्मास्ये शिवालये ३३
यो हरेः शयनादूर्ध्वमेकाम्रे निवसेद्दिनम्
या गतिः सांख्ययोगानां व्रतेनैतां गतिं स वै ३४
चातुर्मास्यविधिं वक्ष्ये शृणुध्वं मुनिसत्तमाः
आषाढदशमीं शुक्लां प्राप्य संकल्पमाचरेत् ३५
नवम्यामष्टतीर्थञ्च कुर्वीत सुसमाहितः
वासुदेवपरो भूत्वा इमं मन्त्रमुदीरयेत् ३६
आजन्म दुरितानाञ्च क्षयाय मधुसूदन
अष्टतीर्थविधिं कुर्वे आज्ञापय जनार्दन ३७
इत्यनुज्ञाप्य गोविन्दं ततो विन्दुसरो व्रजेत्
तत्रापि वासुदेवञ्च इत्यनुज्ञामुदीरयेत् ३८
वासुदेव नमस्तुभ्यं वसुदेवात्मजप्रभो
स्नातुमिच्छामि देवेश सिद्धमात्रं प्रकल्पय ३९
वासुदेवं प्रार्थयित्वा ततो न्यासञ्च विन्यसेत्
हृदि स्कन्दं न्यसेद्विप्राः दक्षिणे नन्दिकेश्वरम् ४०
वामभागे महाकालं पृष्ठे देवमनन्तकम्
मूर्ध्नि न्यसेद्वासुदेवमेवं न्यासञ्च कारयेत् ४१
ततः शुद्धमना भूत्वा सपवित्र उदङ्मुखः
नाभिमात्रे जले स्थित्वा इमं मन्त्रमुदीरयेत् ४२
वासुदेव नमस्तुभ्यं वसुदेवात्मज प्रभो
स्मातुमिच्छामि देवेश सिद्धिमात्रं प्रकल्पय ४३
विन्दूद्भव नमस्तुभ्यं महादेवेन निर्मित
विश्वविन्दो जगद्दीप मज्जयामि तवाम्भसि ४४
अनेन मन्त्रयोगेन स्नानं कृत्वा महीसुराः
कृताञ्जलिपुटो भूत्वा मन्त्रेणानेन प्रार्थयेत् ४५
एष विश्वेश्वरो देव एषा वै मणिकर्णिका
कलावन्तर्हिता काशी मूर्ध्नि एव न संशयः ४६

एवं स्नात्वा विशुद्धात्मा दृष्ट्वा देवं त्रिलोचनम्
वायव्यां दिशि देवस्य व्रजेत् पापविनाशनम् ४७
देवस्याभिमुखो भुत्वा कृताञ्जलिपुटस्तदा
सान्निध्यं भवता पूर्वमादिष्टं शूलपाणिना ४८
प्रतिपेदेऽमितास्माकं निमज्जेऽहं ह्रदे तव
इत्युच्चार्यं जलङ्गत्वा स्वस्थचित्त उदङ्मुख ४९
हृदि ध्यात्वा विरूपाक्षं ततो मन्त्रमनुस्मरेत्
जगद्भृत ह्यनाद्यन्त अशरीरः शरीरधृक् ५०
प्रसीद देव ईशान स्थिरा भक्तिरिहास्तु नः
मज्जये त्रीणि वाराणि पिवतोऽहं षडक्षरम् ५१
ततो गत्वा प्रयत्नेन पश्येत्त्रिभुवनेश्वरम्
अथैशान्यां दिशि भागे गङ्गायमुनमर्दिनी ५२
तस्यास्तटं समासाद्य पूर्वानुज्ञामुदीरयेत्
ततो जलान्तरं गत्वा सपवित्र उदङ्मुखः ५३
स्मृत्वा तु चन्द्रिकाकान्तं मन्त्रमेतदुदीरयेत्
गङ्गाधर नमस्तुभ्यं गङ्गायमुनसङ्गमे ५४
स्नात्वात्र हितमत्यर्थं ब्रह्मविष्णुशिवात्मकम्
मन्त्रेणनेन वै स्नात्वा तत्र गङ्गां समर्चयेत् ५५
ततः पश्येत् प्रयत्नेन लिङ्गं त्रिभूवनेश्वरम्
तथैशान्यां दिगीशस्य कोटितीर्थं प्रपूरितम् ५६
पूर्वानुज्ञां तु वै स्मृत्वा ततो मन्त्रमुदीरयेत्
स्नानं जगदिदं कृत्स्नं यत्पुरयं समुदीरयेत् ५७
तदिहाप्यक्षयं पुरयं ममास्तु त्रिपुरान्तक
स्नात्वैवं विधिवत्तत्र दृष्ट्वा त्रिभुवनेश्वरम् ५८
पूर्वस्यां दिशि पूतात्मा देवं ब्रह्मेश्वरं यजेत्
स्मृत्वाप्यनुज्ञां पूर्वां च ततो मन्त्रमनुस्मरेत् ५९
नमोऽस्तु परमार्थाय प्रजानां पतये नमः
यजेऽत्र शम्भवे कुरडे निमज्जेऽहं तवाज्ञया ६०

ततः त्रिभुवनेशं च दृष्ट्वा मेघेश्वरं व्रजेत्
पूर्वानुज्ञां तु वै स्मृत्वा ततो मन्त्रमुदीरयेत् ६१
नमस्ते शितिकराठाय पर्जन्यपतये नमः
प्रसीद सुमुखो नाम यज्ञमेतमुदीन्दयसे ६२
स्नात्वा तु विधिनाऽनेन दृष्ट्वा तं तु कपर्दिनम्
कौवेर्यां दिशि देवस्यालाम्बुकं तीर्थमाब्रजेत् ६३
समासाद्य तटं तस्य स्मृत्वाऽनुज्ञां तु पूर्ववत्
मज्जयेत्त्रीणि वाराणि मन्त्रेणानेन वै द्विजाः ६४
नमो वः ध्यानयोगाय शाश्वताय कपर्दिने
मनोरथफलावाप्तिं पूरयस्व महेश्वर ६५
ततो गत्वा महेशानं दृष्ट्वा त्रिभुवनेश्वरम्
बन्दयित्वा नमस्कृत्वा ब्रजेदुत्तरपर्वतम् ६६
रामेश्वर इति ख्यातस्तत्र स्नानं समाचरेत्
अनुज्ञां पूर्ववत् स्नात्वा मन्तमेतदुदीरयेत् ६७
वृषभस्योत्तरे तीरे शृङ्गे वसति दक्षिणे
अशोकवारनामा त्वं पापं हर नमोऽस्तु ते ६८
विधिनाऽनेन वै स्नात्वा दृष्ट्वा श्रीकीर्तिवाससम्
सर्वपापहरोदन्ते ज्योतिर्लोकमवाप्नुयात् ६९
एवं कृत्वाष्टन्या तीर्था चमनं मुनिसत्तमाः
दशम्यामेकभक्तं नक्तं वापि समाचरेत् ७०
रात्रौ तु शयनं कार्यं कुशानास्तीर्य भूतले
दशम्यामष्टतीर्थञ्च कुर्याद्वा च द्विजोत्तमाः ७१
पुनः प्रभातसमये एकादश्यां विचक्षणः
कुर्याद्विन्दुसरस्नानं वन्दनं श्रीरमापतेः ७२
मौनी पूर्वमुखो भूत्वा ध्यात्वा श्रीचक्रिणं हृदि
अनुज्ञाप्य जगन्नाथं ततः संकल्पमाचरेत् ७३
निर्विघ्नेन यथा विष्णो चातुर्मास्यव्रतं मम
भवेत्तथाकुरुष्वाशु पापघ्नं पुरायवृंहराम् ७४

एकादश्यां यतात्मा तु ह्यनुज्ञाप्येत्थमच्युतम्
गणानां त्वेति मन्त्रेण विघ्नराजं समर्चयेत् ७५
विघ्नराजं समर्च्याथ एकमेश्वरसन्निधौ
यथाकामेन संकल्प्य ततः कुर्यात्स वै व्रती ७६
ततः प्रतिदिनं विप्राः स्नानं कुर्यात् ह्रदोत्तमे
दर्शनं प्रत्यहं कुर्याद्व्रती श्रीकीर्तिवाससः ७७
देव्याश्च पादहरयोः तथाऽनन्तस्य भोद्विजाः
भेदं न कारयेद्धीमान् ब्राह्मणः कीर्तिवाससः ७८
एषान्तु दर्शनं कुर्यात्प्रत्यहं व्रतिनाम्वरः
वर्जयेत्प्रथमे मासि शाकं विगतमत्सरः ७९
दधिवर्जं भाद्रपदे आश्विने वर्जयेत् पयः
कार्त्तिके मासि सम्प्राप्ते वर्ज्यो मांसो द्विजोत्तमाः ८०
दीपदानन्तु वै कुर्यात् शिर उद्दिश्य प्रयहम्
स तु स्त्रियं न संवीक्षेद्वर्जयेत्तैलमामिषम् ८१
गते तु कार्तिके मासे संदीक्ष्या व्रतचारिणः
क्षुधार्तिभ्योऽन्नदानञ्च कर्तव्यं व्रतिना सदा ८२
अन्यतीर्थाद्विशिष्टं हि पुण्यं नूनमुदाहृतम्
तस्मादन्नप्रदक्षेत्रे मुक्तिः तस्य करे स्थिता ८३
अन्नं प्रतिदिनं विप्राः दातव्यं पुण्यमिच्छता
सर्वन्तु विफलं तस्य क्षेत्रेक्ऽस्मिन् विमुखे तिथौ ८४
सर्वदानादन्नदानं विशेषं समुदाहृतम्
तस्माद्विप्राः क्षेत्रवरे ह्यन्नदः सर्वदानदः ८५
अन्नदानात्परं दानं न भूतो न भविष्यति
गजाश्वरथदानेभ्यो ह्यन्नदानं विशिष्यते ८६
अन्नदं सर्वदं प्राहुः पूर्वं विद्याविचक्षणाः
अन्नदानं सदा काले कर्तव्यं शिवसद्मनि ८७
चातुर्मास्यव्रतं विप्रा य एवं कुरुते पुमान्
नारी वाथ द्विजश्रेष्ठाः स फलं लभते ध्रुवम् ८८

दिने दिनेऽश्वमेधस्य फलमाप्नोति मानवः
राजसूयस्य यज्ञस्य कार्तिके समुदाहृतम् ८९
धर्मार्थकाममोक्षार्थं समाप्नोति न संशयः
वेदज्ञो ब्राह्मणो धीमान् राजा च विजयी भवेत् ९०
वैश्यो धनसमृद्धः स्यात् शूद्रः सद्गतिमाप्नुयात्
अन्यक्षेत्रे कृतं पापं शिवसद्मनि नाशयेत् ९१
ब्रह्महत्यादिपापानि अन्यक्षेत्रे कृतानि च
क्षयमायान्ति क्षेत्रेऽस्मिन् प्रविष्टे नरसत्तम ९२
अन्यक्षेत्रे कृतं पापं स्वर्णकूटे विनश्यति
स्वर्णकूटे कृतं पापं वज्रलेपं भवेद्ध्रुवम् ९३
ऋषय ऊचुः
अस्मिन्क्षेत्रे कृतं पापं वज्रलेपं भवेदिति
त्वयोक्तं यद्द्विजश्रेष्ठ तत्क्षयं केन वा भवेत् ९४
भरद्वाज उवाच
माघे मासे कृष्णपक्षे चतुर्दश्यां द्विजोत्तमाः
क्षेत्रे प्रदक्षिणं कुर्याद्यो नरः संयतात्मवान् ९५
देवस्य दक्षिणे पूर्वे पश्चिमे चोत्तरे तथा
क्रोशमात्रं परं क्षेत्रं शिवस्य परमेष्ठिनः ९६
प्रदक्षिणञ्च यः कुर्याद्येरुं सूर्यहरं द्विजाः
तस्य क्षेत्रं कृतं पापं विनश्यति न संशयः ९७
तत्र मौनी भवेद्धीमान्कुर्यादनशनव्रतम्
दिनेनैकेन वै कुर्यात्तत्र सर्वं प्रदक्षिणम् ९८
नैव तिष्ठेत्क्षणमपि न हासं नैव रोदनम्
हासे च रोदने विप्रा विफलं वै प्रदक्षिणम् ९९
प्रदक्षिणेन क्षेत्रस्य कोटिजन्माघनाशनम्
द्वितीयेन द्वितीयस्य तृतीयेन त्रिजन्मना १००
एकाम्रकृतपापानां क्षयाय द्विजसत्तमाः
क्षेत्रप्रदक्षिणाच्चात्र नान्यः पन्थास्तु विद्यते १०१

अन्यतीर्थे कृतं पापं स्वर्णकूटे विनश्यति
स्वर्णकूटे कृतं पापं विनश्यति प्रदक्षिणे १०२
इति श्रीकपिलपुराणे भरद्वाज ऋषिसम्वादे चातुर्मास्य-
व्रतविधानं नामाष्टादशोऽध्यायः १८

## अथैकोनविंशतितमोऽध्यायः

ऋषय ऊचुः
अस्मिन् क्षेत्रे द्विजश्रेष्ठ यात्रा यत्र समीरिताः
संक्षेपेण तु ता सर्वास्त्वमस्मान्कथय प्रभो १
भरद्वाज उवाच
तस्मिन्नेकाम्रकवने सप्त यात्राः प्रकीर्तिताः
अहं ताः कथयिष्यामि शृणुध्वं मुनिपुङ्गवाः २
मार्गशीर्षे कृष्णपक्षे या स्यात्प्रथममष्टमी
तत्र यात्रा समुद्दिष्टा देवदेनेन शम्भुना ३
आज्ञां वरुणभूपाय पुरा शम्भुः प्रदत्तवान्
समीपं तव लिङ्गस्य यास्यामि प्रथमाष्टमी ४
ततः प्रभृति भोविप्रा यात्रैका प्रथमाष्टमी
तत्र स्नानं जपो दानं सर्वं पापप्रणाशनम् ५
अथ नाम्नाऽभिधास्यामि यात्रां पापविनाशिनीम्
भास्कराय पुरा विप्रा आज्ञां दत्वा तु शम्भुना ६
शृणुध्वं मद्वचो राजन्तव प्रीत्यावदाम्यहम्
माघशुक्लस्य सप्तम्यां यात्रा पापविनाशिनी ७
तस्यां तिथौ सहस्रांशोस्तव लिङ्गस्य सन्निधिम्
यास्यामि च प्रदास्यामि लोकानां फलमुत्तमम् ८
तिलदानं तु तत्रोक्तं महापुण्यप्रदायकम्
तत्र श्रीभास्करेशस्य पूजनं मुक्तिलक्षणम् ९
तथाऽन्यच्च प्रवक्ष्यामि कपिलस्य महात्मनः
लिङ्गस्य सन्निधानञ्च देवदेवस्य शूलिनः १०

कपिले पूजिते लिङ्गे वरो दत्तः कपर्दिना
तत्राऽहं सर्वभावेन पूजां गृह्णामि वै मुने ११
फाल्गुनस्य सिते पक्षे यदा स्यात् सौरवासरः
तत्र यात्रां करिष्यामि शुभया च सहोमया १२
प्राणिनां तु प्रदास्यामि वाञ्छितं फलमुत्तमम्
पवित्रे कापिले क्षेत्रे भोक्तॄणाञ्च विशेषतः १३
तैलं दत्वा शिरोगात्रमञ्जनं कापिले ह्रदे
मन्त्रेणानेन विधिवत्तत्र स्नानं समाचरेत् १४
नमः कपिलतीर्थाङ्गं गङ्गाम्बुधिफलप्रदम्
पापं नाशय मे तीर्थ मज्जयेऽहं तवाम्भसि १५
इति मन्त्रं समुच्चार्य तत्र स्नानं समाचरेत्
ब्रह्महत्यादिपापानि नाशयेन्नात्र संशयः १६
एवमुक्त्वा तु भगवान् तत्रैवान्तरधीयत
अथान्ययात्रां वक्ष्यामि अशोकास्यां महाफलाम् १७
राधवाय पुरा विप्राः प्रसन्नो भगवानभूत्
उवाच मधुरं वाक्यं वाक्यज्ञश्चोत्तमौजसाम् १८
राम राम महाबाहो मद्वाक्यं शृणु राघव
मोक्षाय सर्वभूतानां वक्ष्ये यात्रां महाफलाम् १९
चैत्रे मासि च सम्प्राप्ते यदा शुक्लाष्टमी भवेत्
याम्ये गिरिजया सार्द्धं मम लिङ्गस्य सन्निधौ २०
रथस्थं तत्र मां दृष्ट्वा ब्रह्महत्यादिपातकैः
मुच्यते नाऽत्र सन्देहस्त्वपि चाण्डालयोनितः २१
ततः प्रभृति भो विप्रा अशोकास्या महाफला
अथान्याञ्च प्रवक्ष्यामि यात्रां वै मदनान्तिकाम् २२
चैत्रशुक्लचतुर्दश्यां मदनेनार्चयच्छिवम्
सर्वपापविनिर्मुक्तः शिवलोकं व्रजेद्ध्रुवम् २३
विशेषण तु कर्तव्या श्रीतीर्थेश्वरसन्निधौ
यात्रामथान्यां वक्ष्येऽहं प्रभो रामस्य सन्निधौ २४

रामेण पूजितं यच्च श्रीरामेश्वरसंज्ञकम्
तदेव लिङ्गं रामस्य यामदग्नस्य सम्मतम्  २५
आषाढस्य च शुक्लायामष्टम्यां परिकीर्तिता
यामदग्नाय रामाय पुरा दत्तवरो हरः  २६
प्राणिनां प्राणनाशाय यास्येऽहं तव सन्निधौ
अथान्यामभिधास्यामि द्वितीयाख्याँ महाफलाम्  २७
शुक्लपक्षे द्वितीयायां कार्तिकस्य विशेषतः
यात्रा कामप्रदा विप्राः श्रीयमेश्वरसन्निधौ  २८
इत्येषां सप्तमी यात्रा कथिता सा महाव्रताः
ततः किमधिकं विप्राः पुराणं श्रोतुमिच्छथ  २९
कपिल उवाच
तस्योक्तमिदमाकर्ण्य भरद्वाजस्य ते तदा
आनन्दाश्रुजलैर्युक्ता गमनं चक्रिरे वनम्  ३०
आद्ये च दिवसे सर्वे ययुर्वाराणसीं पुरीम्
स्नात्वा च जाह्नवीतोये ददृशुर्लिङ्गमुत्तमम्  ३१
ततस्ते हर्षमतुलमावापुर्मुनिसत्तमाः
पुनस्तं पूजयामास देवदेवं महेश्वरम्  ३२
द्वितीये दिवसे चैव गङ्गां प्रापुर्महीसुराः
पिण्डदानादिकं तत्र गादाधरकरे कृतम्  ३३
ततो बहुदिने ते च प्रापुर्विरजमण्डलाम्
स्नात्वा वैतरणीतोये ददृशुः कोपरूपिणम्  ३४
ततस्ते विरजां देवीं देवं मुक्तेश्वरं हरम्
अखण्डलेश्वरञ्चैव त्रिलोचनमहेश्वरम्  ३५
ततो ब्राह्मीं नदीं प्रापुः पूर्वसागरगामिनीम्
सर्वपापक्षयकरीं स्नानं चक्रे द्विजोत्तमाः  ३६
तृतीये दिवसे राजन् ययुरेकाम्रकं वनम्
तत्र गत्वा मुनिश्रेष्ठाः आश्रमाणि विलोक्य च  ३७
सिद्धाश्रमं समाश्रित्य मुदं प्रापुर्महीपते

एवं तीर्थे नृपश्रेष्ठ वरिष्ठे पुष्करे पुरा ३८
ऋषीणां चैव सम्वादं भरद्वाजेन धीमता
कथितं तच्च तुष्ट्यर्थमुत्कलं देशमुत्तमम् ३९
इदानीञ्च महीपाल किमन्यच्छ्रोतुमिच्छसि
य इदं परमं पुण्यं महात्म्यं चोत्कलस्य च ४०
शृणोति हृष्टरोमा स पुण्यां गतिमाप्नुयात्
य इदञ्चोत्कलाख्यानं पठेन् मानवसत्तमः ४१
स याति परमं स्थानं देवादीनाञ्च दुर्लभम्
उत्कलस्य च माहात्म्यं ये शृण्वन्ति महीपते ४२
गोसहस्रप्रदानस्य ते नराः फलमाप्नुयुः
यस्त्विदं परमं पुण्यं करोति नरसत्तमः ४३
तस्य धर्मे स्थिता बुद्धिः न चलेत्तु कदाचन ४४

इति श्रीकपिलपुराणे भरद्वाजर्षिसम्वादे देवानां मुक्तिप्राप्तिर्नाम एकोनविंशतितमोऽध्यायः १९

## अथ विंशतितमोऽध्यायः

सत्यजिदुवाच
श्रुताः पुरातना धर्मा नदीनां वर्णनानि च
श्रुत्वा तीर्थान्यनेकानि पापं मे विलयं गतः १
श्रीकपिल उवाच
सफलानि च क्षेत्राणि कथितानि मया पुरा
इदानीं कथयिष्यामि शृणु त्वमवनीपते २
कथिता या पुरा राजन् ब्रह्मघघ्नी महानदी
तस्यास्तु तनयाऽख्याता दक्षिणे दक्षिणागमा ३
सा नदी भृगुणाऽऽनीता तपसा च महात्मना
ततः सा भार्गवी ख्याता गोसहस्रफलप्रदा ४
सिद्धेश्वरी समासाद्य तथासिद्धेश्वरीवधे
भार्गवी भृगुणाऽऽनीता गङ्गासमफलप्रदा ५

तस्यास्तटे महीपाल यत्र स्याच्छिवलिङ्गकम्
तत्र सा मोक्षदा ख्याता ह्याभिमुख्ये विशेषतः ६
स्नानमन्त्रं निबोध त्वं पुण्यं नृपतिसत्तम
विफलं भवति स्नानं स्नानमन्त्रमृते यतः ७
भृगुकन्ये नमस्तुभ्यं गोसहस्रफलप्रदे
पापानि विलयं यान्तु मज्जने तव वारिणि ८
इत्युक्त्वा मज्जयेत्तस्यां तर्पयेत्पितृदेवताः
प्राप्नोति परमं स्थानमेकविंशतिपूरुषैः ९
तस्यास्तु तनया राजन् पुष्यभद्रेति विश्रुता
पूर्वस्यां दिशि सा ख्याता पूर्वसागरगामिनी १०
तस्यां स्नानं महीपाल कार्तिके सर्वकामदम्
तथा माघे तथाऽऽषाढे फाल्गुने च विशेषतः ११
पुष्यभद्रा नदी या तु सा कृष्णा नात्रसंशयः
शम्वरं निर्मलं यस्या वाञ्छन्ति पितृदेवताः १२
तस्या दुहितरमन्यां प्रवेद्न्य भूभृताम्वर
दधिनादेति विख्याता एकाम्रवनसन्निधौ १३
आनीता ऋषिणा चासौ तापसेन दधीचिना
तज्जले स्नानमात्रेण सोमलोकं व्रजेन्नरः १४
तत्रैव दृश्यते लिङ्गं व्योमकेशस्य भूपते
तटे तस्याः प्रयत्नेन तत्र स्नानं समाचरेत् १५
अन्यस्नानाच्छतगुणं सहस्रगुणितं फलम्
प्राप्नोत्यभिमतं कामं स्नानकृन्नरसत्तम १६
महीपाल शृणुष्वं त्वं प्राचीं गुप्तसरस्वतीम्
यया कालाग्निना दग्धं रक्षितं सचराचरम् १७
एकाम्रकाननात्पूर्वे योजनान्ते महीपते
नाम्ना प्राचीति विख्याता सरिदास्ते सरस्वती १८
प्राच्यां दिशि महेशस्य यत्र सागरसङ्गमः
क्रोशे क्रोशे तटे लिङ्गं ततः प्राची सरस्वती १९

तस्यां स्नात्वा महीपाल ज्योतिर्लोकं व्रजेन्नरः
सर्वपापविनिर्मुक्तः सप्तविंशतिपूरुषैः २०
सर्वपुण्यप्रदा मान्या वैकुण्ठभवनप्रदा
साक्षात् सरस्वती प्राची नान्यस्यां नृपसत्तम २१
क्रोशे क्रोशे च लिङ्गानि तटे तस्या मनोरमे
सर्वत्र सुखसञ्चारे विद्वजनसुसेविते २२
तत्र विघ्नेवरो नाम विघ्नमूलाश्रितो हरः
तं दृष्ट्वा पूजयित्वा च नरः शिवमवाप्नुयात् २३
विघ्नशाखी महीपाल कल्पवृक्षसमो भुवि
तस्य प्रदक्षिणं कृत्वा मुच्यते ब्रह्महत्यया २४
त्रिवेणीसङ्गमं तत्र महापुण्यप्रदायकम्
तत्र स्नानं महीपाल माघमासे प्रकीर्तितम् २५
विशेषेण प्रवक्ष्यामि अमावस्याफलं महत्
स्नानं सन्ध्यातपोदानमक्षयं तु समीरितम् २६
प्राच्यां तु पाण्डवे तीर्थे स्नानं कृत्वा विधानतः
स पापक्षयमादत्ते शिवसालोक्यतां व्रजेत् २७
महल्लिङ्गं प्रवक्ष्येऽहं तत्तटे ह्यमरेश्वरम्
अमरेशं समालोक्य न नरो भवतामियात् २८
तस्यास्तटे महेशस्तु कपिलेश्वरसंज्ञकः
सर्वपापहरो देवस्तल्लिङ्गं पूजितं मया २९
एवं बहूनि लिङ्गानि सन्ति तस्यास्तटे शुभे
कः शक्नोति गुणान् वक्तुं तस्याः प्राच्याः महीपते ३०
संक्षेपेण मयाऽख्यातं त्वत्प्रसङ्गाच्च पृच्छतः ३१
सत्यजिदुवाच
उत्कलस्य च माहात्म्यं श्रुतञ्च सकलं मया ३२
इदानीञ्च मुनिश्रेष्ठ ज्ञानयोगं वदस्व मे ३३
इति श्रीकपिलपुराणे उत्कलमाहात्म्यवर्णने
विंशतितमोऽध्यायः २०

## अथैकविंशतितमोऽध्यायः

कपिल उवाच
ज्ञानयोगं परं गुह्यं कथयामि नराधिप
शृणुष्वैकमना भूत्वा यदि श्रद्धा प्रवर्त्तते १
नन्दिकेश्वरसम्वादे देवदेवेन शम्भुना
पुरा श्रुतं मया भूय इदानीं शृणु चानघ २
नमस्ते पार्वतीनाथ भक्तानां करुणाकर
कथं विमुच्यते जन्तुः संसारात्कर्मबन्धनात् ३
महादेव उवाच
कामं क्रोधं परित्यज्य यो जन्तुः भजते हि माम्
परां मुक्तिं प्रयच्छामि तमहं नात्र संशयः ४
कामक्रोधौ यदा पुत्र परित्यजति मानवः
तदाऽस्य च हृदिस्थोऽयं प्रकाशमधिगच्छति ५
पुत्रदारसमायुक्ता ये चानन्दन्ति मानवाः
न जानन्ति परं ज्योतिः हृदयं नारायणं प्रभुम् ६
दमेन मोहितानार्या ये क्रीडन्ति नराधमाः
तेषां निरयवासञ्च सत्यं सत्यं महोदितम् ७
कामं क्रोधं मदं मोहं हिंसां पैशुन्यमेव च
अहङ्कारं तथा लोभं त्यज त्वं नन्दिकेश्वर ८
कर्मणा मानसा वाचा संकल्पं त्यजते तु यः
हरिनामजपेनैव भवाब्धिं तरते तु सः ९
हरिनामामृतञ्चास्ये कृत्वा वैष्णवसत्तमः
अतः सर्वमवाम्भोधिकामसङ्कल्पवर्जिताः १०
हरिर्यथा जगन्नाथस्तथाऽहं जगतां पतिः
आवयोरन्तरं नास्ति आकाशे पवनं यथा ११
हरेर्नाम हरेर्नाम कीर्तयस्व निरन्तरम्
ददाति परमां मुक्तिं सायुज्यं नात्र संशयः १२
विश्वासः क्रियतां तस्मिन् हरौ त्रैलोक्यनायके

यस्य मायासमाविष्टो ब्रह्मा भ्रमति सर्वदा १३
जगदुपरि गोविन्दे मयि वातस्वरूपिणि
कुरु भक्तिं दृढां पुत्र मोक्ष्यसे दृढबन्धनात् १४
मयापि चार्यसे नाऽहं करोमि च करोति च
शङ्करः नीलकण्ठश्च श्रीधरो नीलविग्रहः १५
गौरीशो गोपिकाकान्तः ध्यायतामेकचेतसा
माधवस्योमाधवस्य किञ्चिद्भेदो न विद्यते १६
मूढा भेदं प्रकुर्वन्ति प्रपच्यन्ते हि रौरवे १७
कपिल उवाच
इत्युक्त्वा भगवान् शम्भुः ततस्तूष्णीम्बभूव ह
एवं ते पार्वतीनाथं नन्दी पुनरभाषत १८
वैष्णवानां च चिह्नानि तस्य विष्णोर्महात्मनः
ततोऽहं श्रोतुमिच्छामि वद मां करुणाकर १९
शङ्खचक्राङ्कितं देहं तुलसीदामभूषितम्
श्रीमहादेव उवाच
काम क्रोधपरित्यक्तं चिह्नं वैष्णवसंज्ञकम् २०
एषां कौपीनकं श्रेष्ठं मुखे च मधुरं वचः
सर्वदानन्दहृदयं चिह्नं वैष्णवसंज्ञकम् २१
आनन्दाश्रुसमायुक्तमुच्चैर्गोविन्दकीर्तनम्
असङ्गस्य परित्यागश्चिह्नं वैष्णवसंज्ञकम् २३
सर्वस्वं नाम बुद्धित्वं सर्वसत्त्वसुखावहम्
दयासत्यसमायुक्तं चिह्नं वैष्णवसंज्ञकम् २४
निर्ममं निरहङ्कारं देवताब्राह्मणार्चनम्
सतां सम्प्रीतिजननं चिह्नं वैष्णवसंज्ञकम् २५
एवं वैष्णवचिह्नानि यस्य सन्ति स वैष्णवः
अन्ये ये दम्भिका लुब्धा तेषां लिङ्गं न कारणम् २६
इत्युक्त्वा भगवान् शम्भुर्गौरीक्रीडागुहान्तरम्
प्रतीहारी त्वसौ नन्दी तत्रास्ते धृतदण्डकः २७

नन्दिकेश्वरसम्वादमेवं देवेन शम्भुना
सर्वशान्तिकरं पुरायं गुह्यं ते कथितं मया २८
अवैष्णवे न वाच्यस्तु देवब्राह्मणनिन्दकैः
ज्ञानयोगो मनोमले न वाच्यं संशयात्मनि २९
य इदं परमं गुह्यं ज्ञानयोगं पठेन्नरः
शृणुयादपि यो भक्त्या स शान्तिमधिगच्छति ३०

इति श्रीकपिलपुराणे उत्कलक्षेत्रोपाख्याने चतुःक्षेत्रमाहात्म्यं
नामैकविंशतितमोऽध्यायः
समाप्तमिदं कपिलपुराणम्

कृत्याऽनयाऽभिनवया लोकः प्रसन्नतामियात्
भवानीसहितो देवो विश्वनाथः प्रसीदतु
पुराणोपपुराणानां प्रचारो येन जायताम्
तथा कुर्वन्तु विद्वांस इति मे प्रार्थना शुभा

*Kapilapuranam (A critical edition)*, Shrikrishnamani Tripathi, ed., Chaukhamba Surbharati Prakashan, publisher, Varanasi, 1981.